# ॥ सुनीति कुसुम माला सटीका ॥



श्रीमदप्पय्यदीक्षितवंश्येन

**श्रीमदप्पावाजपेयेन रचिता**

[ प्रथमो भागः ]



# SUNITI KUSUMA MALA.

( WITH COMMENTARY )

BY

**APPA VAJAPEYA**

PART I.



PUBLISHED BY

K. V. SUBRAHMANIA SASTRIAR.

**SANSKRIT PANDIT,**

MADURA COLLEGE, MADURA



KUMBAKONAM

SRI JANARDANA PRINTING WORKS



Price ] 1927. [ As. 8.




स्वस्ति श्रीमदखिलभूमण्डलालङ्कारत्रयस्त्रिंशत्कोटिदेवतासेवित श्रीकामाक्षीदेवीसनाथ श्रीमदेकाम्रनाथ श्रीमहादेवीसनाथ श्रीहस्तिगिरिनाथसाक्षात्कारपरमाधिष्ठान सत्यव्रतनामांकितकाञ्चीदिव्यक्षेत्रे शारदामठसुस्थितानाम् अतुलितसुधारसमाधुर्यकमलासनकामिनीधम्मिल्लसम्फुल्लमल्लिकामालिकानिष्यन्दमकरन्दझरीसौवस्तिकवाङ्गिगुम्भविजृम्भणानन्दतुन्दिलितमनीषिमण्डलानाम् अनवरताद्वैतविद्याविनोदरसिकानाम् निरन्तरालंकृतशान्तिदान्तिभूम्नाम् सकलभुवनचक्रप्रतिष्ठापक श्रीचक्रप्रतिष्ठाविख्यातयशोऽलंकृतानाम् निखिलपाषण्डपण्डकण्टकोत्पाटनेन विशदीकृतवेदवेदान्तमार्गषण्मतप्रतिष्ठापकाचार्याणाम् श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीजगद्गुरुश्रीमच्छंकरभगवत्पादाचार्याणाम् अधिष्ठाने सिंहासनाभिषिक्तश्रीमन्महादेवेन्द्रसरस्वतीसंयमीन्द्राणाम् अन्तेवासिवर्य **श्रीमच्चन्द्रशेखरेन्द्रसरस्वतीश्रीपादैः** ।

अस्मदत्यन्तप्रियशिष्य श्रीपञ्चनदक्षेत्रपरिसरवर्त्यम्माळग्रहारवास्तव्य **सुब्रह्मण्यशास्त्रिविषये** सर्वाभीष्टसिद्ध्यर्थं क्रियते नारायणस्मृतिः ।

सरळपदपदार्थगाम्भीर्यरमणीयानां विविधधर्मावबोधकानां श्री-मदाचार्यभक्तिरसभरितानां **श्रीशंकरभगवत्पादाचार्यचरित सुनीति कुसुममालादि**ग्रन्थानां मुद्रणेन प्रचारणेन तद्विषयप्रवचनेन च लोकोप-योगिकार्ये बद्धश्रद्धस्य भवतः एतादृशीं प्रवृत्तिमालोक्य नितरां मोमुद्यामहे । अयं च भवदुद्यमस्सर्वत्र सफलस्सर्वैस्समादरणीयस्स्यादित्याशास्महे ॥

मु । पुदुच्चेरी
क्षयसं । मार्गशीर्ष
कृ । ६ ॥ स्थिरवासरे

नारायणस्मृतिः ॥

# PREFACE.

THIS book is a Sanskrit rendering of the famous Kural written by the renowned Thiruvalluvar This translation is the work of the famous scholar Sri Appa Vajapeya equally renowned for his erudition in Sanskrit and Tamil.

My learned brother, Brahmasri Swami Sastrigal, Professor of Sama Veda in the patasala of Ammalagraharam, being anxious to publish this book, found it impossible to obtain another copy for comparing notes. This for a time deterred the publication of the work. But owing to the requests of several friends and my entreaties he gave his own manuscript to enable me to publish the work.

With this manuscript as my authority I published the Text alone in 1922. It was approved by the Text-book Committee. The author has also written a commentary quoting various Sastras and authorities, thus making the work more useful to scholars I have now ventured to publish the text together with original commentaries, part by part. I have been enabled to embark on this enterprise by the kind help of several sympathisers.

This book begins with Bhagavad Bakthi and ends with Sushilam If this book meets with public approval and encouragement I shall in the next volume give the remaining parts.

I have only to add that I belong to the family of the talented author. In conclusion I beg to tender my heartfelt thanks to all who have helped me financially and otherwise, and thus helped to rescue from oblivion a work of rare merit.

K. V. SUBRAHMANIA SASTRI,

*Assistant Sanskrit Pandit,*

*Madura College, Madura.*

ஸ்ரீ.

# மதிப்புரை.

மதுரை காலேஜ் ஸம்ஸ்கிருத பண்டிதர் பிரம்மஸ்ரீ கே. வி. சுப்பிரமணிய சாஸ்திரியவர்களால் பிரசுரிக்கப்படுகிற ஸூக்திகுஸுமமாலா என்னும் நூலானது திருக்குறள் அறத்துப்பாலின் ஸம்ஸ்கிருத மொழிபெயர்ப்பாயிருக்கிறது. இதை ஸ்ரீ அப்பயதீக்ஷிதரவர்களின் வம்சத்தரான ஸ்ரீமத் அப்பாவாஜபேயரவர்கள் இன்றைக்கு அறுநூறு வருஷங்களுக்கு முன்பு இயற்றி அதற்கு வியாக்கியானமும் எழுதியிருக்கிறார்கள். அவற்றை ஸ்ரீ காஞ்சி காமகோடி பீடம் ஸ்ரீ சங்கராசார்ய ஸ்வாமிகள் பார்வையிட்டு ஆமோதித்திருக்கிறார்கள். சென்னை பிரஸிடென்ஸி காலேஜ் ஸம்ஸ்கிருத புரொபஸர் பிரம்மஸ்ரீ குப்புஸ்வாமி சாஸ்திரி M. A. அவர்கள் முதலான சிறந்த பண்டிதர்களும் நன்கு மதித்திருக்கிறார்கள்.

நானும் இப்புத்தகத்தைப் பார்த்த அளவில் வடமொழி வல்லார்க்குத் தமிழ் நூற் பெருமையை உணர்த்தும் தரமுடையதென்றெண்ணுகிறேன். எத்துணையோ நூல்களைப் பிறமொழிகளுக்கு அளிக்கும் வடமொழி இதனை மொழிபெயர்த்துக் கொண்டிருப்பதனால் இதன் அருமை நன்கு விளங்கும். இதனை அச்சிட முயன்றுள்ள நம் பிரம்மஸ்ரீ சுப்பிரமணிய சாஸ்திரிகளது நன்முயற்சி பயனடையுமாறு உதவி புரியும் புண்ணியசீலரது ஒப்புரவாண்மை போற்றத் தக்கதாகும்.

தி. ந. நாராயணையங்கார்.

21—4—27,
மதுரை.

பத்திராதிபர்,
செந்தமிழ்.

॥ ओं श्रीः ॥

॥ श्री मीनाक्षीसुन्दरेश्वराभ्यां नमः ॥

# ॥ सुनीतिकुसुममाला सटीका ॥

येसीवर्णलितिप्रसिद्धसुमति श्रीहूणदेश्यप्रभो-
रुत्साहस्य वशंवदेन रचिता धर्मार्थकामार्थिनाम् ।
बालानां सुखबोधनाय सरळश्लोकोत्पलैर्गुम्फिता
कण्ठालंकृतिरस्तु सर्वसुदृशां सा नीतिमालाऽधुना ॥१॥

अप्पय्य दीक्षितशिखामणिवंशसार-
मुक्ताफलेन कविमार्गविचक्षणेन ।
अप्पाभिधानशिशुना रचितेयमार्यै-
रङ्गीकृता भवतु धर्मसरोजमाला ॥२॥

वर्णल्नामकहूणराजविभुना प्रोत्साहितोऽहं पुरा
प्रोक्तं द्राविडभाषया सुकविना श्रीवल्लभाख्याजुषा ।
धर्मस्कन्धमुदाहरामि सरलैः श्लोकैः समं टीकया
सन्तुष्यन्तु विपश्चितो गुणकणग्राहेऽपि सान्द्रादराः ॥३॥

अप्पय्याध्वरिवंशमौक्तिकमणिः ख्यायते योऽष्टमो-
यो विश्वेश्वरवाजपेयमखिनो बालाम्बिकागर्भजः ।
सुब्रह्मण्यपदं च वेंकटमुखं यन्नामधेयं विदुः
तस्येयं कृतिरेधतां क्षितितले सूर्येन्दुतारावधि ॥४॥

**अवर्णपूर्विका यथा समस्तवर्णमातृका ।**
**महेशपूर्विका तथा प्रसिद्धलोकसन्ततिः ॥**

टीका। समस्तवर्णमातृका। समस्ता ये वर्णाः तत्तच्छब्दघटकाः तेषां मातृका प्रकृतिभूता अकारादिक्षकारान्ता वर्णाः जात्यभिप्रायमेकवचनं, मातेव मातृका। इव प्रतिकृताविति सादृश्यार्थे संज्ञायां चेति कन् । अवर्णपूर्विका अकारःसर्ववर्णाग्र्य इति वचनात् । लक्षणत्वेन पाणिन्यादि प्रणीत व्याकरणशास्त्रमूलभूत माहेश्वरसूत्रस्थितवर्णमातृकाणां अकारपूर्वकत्वात् । अक्षराभ्यासप्रवृत्तबालादीनामपि अकारस्य प्रथममुपदेशाच्च । किञ्च । लक्ष्यभूतशब्दराश्यात्मकवेदस्यापि अग्निमीडे इति अकारपूर्वकत्वाच्च समस्तवर्णप्राथमिकत्वं अकारस्येति भावः । तथा प्रसिद्धलोकसंततिः । प्रसिद्धाः प्रत्यक्षसिद्धाः ये लोका भौतिकरूपाः तेषां संततिः समुदायः । महेशपूर्विका । पूर्वसिद्धमहेश्वरमूलिका । कार्यसिद्धेः कारणं विनाऽसंभवादितिभावः । नामरूपतया द्विविधेलोके नाम्नामकारः कारणं भगवद्वाचकत्वेन तत्प्रसिद्धेः । तद्वाच्यस्य भगवतः नामप्रतिपाद्यसर्वलोककारणत्वं औचित्येन दर्शितं । वाच्यवाचकयोरभेदादेकमेव कारणमित्यभिप्रायः । भेददृष्टिमवलंब्य उपमानिर्देशः । अत्र पूर्णोपमालंकारः । मातृकाया लोकसंततेश्च उपमानोपमेययोर्यथातथाशब्दरूपस्य वाचकस्यावर्णपूर्वकत्वमहेश्वरपूर्वकत्वयोः बिंबप्रतिबिंबभावेन एकीभूतयोः समानधर्मयोश्चोपादानात् । वृत्तं, नगस्वरूपिणी । प । द्वितुर्यषष्ठमष्टमं गुरुप्रयोजितं यदा । निवेदयन्ति तां तदा बुधा नगस्वरूपिणीम् । इति तल्लक्षणात् ॥

1—வத்து சுலோகத்தின் அதிக பாடம்.

கடவுள் வாழ்த்து — **भगवद्भक्तिः ॥**

---

**अथाक्षरावलिर्जयत्यकारपूर्विका यथा ।**
**तथाखिलं चराचरं जगन्महेशपूर्वकम् ॥१॥**

**टीका०** । धर्मार्थकाममोक्षभेदेन चतुर्विधःपुरुषार्थः । यद्यपि सकलजनाभिलषणीयं सुखमेव पुरुषार्थः । तस्यैव निरूपाधिकप्रेमास्पदत्वात् । तच्च सुखं कृतिममकृत्रिमंचेति द्विविधंतत्काममोक्षाभिलपनीयं पुरुषार्थो भवितुमर्हति । तथापि तत्साधनत्वाद्धर्मः तत्साधनत्वादर्थश्च पुरुषैरर्थ्यमानत्वात्पुरुषार्थावित्र । तत्साधनार्थं च वर्णाश्रमव्यवस्था मन्वादिमहर्षिप्रणीता । धर्मार्थकामानां गृहस्थाश्रमिभिः प्राप्यत्वम् । मोक्षस्तुयत्याश्रमिभिःप्राप्यः, इति यत्याश्रमएव मोक्षाश्रम उच्यते । मोक्षस्यच साधनं ज्ञानं, तदाश्रमनिष्ठस्यैव संभवतीति, तत्साधनेषु श्रवणमननादिषु प्रवृत्तेर्विविदिषां विनाऽसंभवात् । विविदिषायाआश्रमधर्मसाध्यत्वात् वेदानुवचनयज्ञदानानशनतपोरूपब्रह्मचारिगृहस्थवानप्रस्थाश्रमधर्माणां त्रयाणामपि परंपरया साधनत्वमेव । तत्र मोक्षनिरूपणस्य उपनिषदेकसमधिगम्यतया तदर्थमनेकमतप्रवृत्तेर्बहुविधान्तःकलहसमाधानादिप्रयत्नसाध्यतया पूर्वाचार्यैर्बहुधाकृतत्वाच्च, तद्विहाय धर्मार्थकामानामेव निरूपणार्थमेतद्ग्रन्थमारभमाणः निर्विघ्नपरिसमाप्त्यादिप्रयोजनकतया विशिष्टेष्टदेवतानुसंधानरूप मंगळमाचरन्शिष्यशिक्षायै ग्रन्थतोनिबध्नाति । अथेति । मङ्गळानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ । इत्यभिधानकोशस्मृत्या अथशब्दआरम्भार्थकः । मङ्गळार्थश्च । आनन्तर्यार्थोऽपि भवति । प्रळयानन्तरमित्यर्थः । प्रळयानन्तरं जायमानं स्थावरजङ्गमात्मकं सकल-

जगत् । महेशपूर्वकं ईश्वरकारणकं । यथा वर्णानामकारः कारणं । अकारस्सर्ववर्णाग्र्य इत्यादि शास्त्रसिद्धं । सर्ववर्णानामुत्पत्तौ अकारस्य मूलाधारादुदानेनाऽभिव्यक्तस्यैव कारणत्वात् । एवं जगदुत्पत्तौ ब्रह्मविष्णुरुद्रनियामकस्य महेश्वरस्य कारणत्वादित्यर्थः । प । त्रयस्ते कारणात्मानः साक्षाज्जाता महेश्वरात् । चराचरस्य विश्वस्य सर्गस्थित्यन्तहेतवः इत्यादिशास्त्रात् । अत्र नामरूपप्रपञ्चस्य विविधस्यापि कारणं महेश्वरएव । वाच्यवाचकयोरभेदात् । भेददृष्टिमवलम्ब्य उपमानिर्देशः । वाक्यार्थस्तु । अथाक्षरावळिः अक्षराणां पञ्चाशद्भेदभिन्नानां आवळिः समूहः अकारपूर्विका मुखपुटवर्त्यास्यानन्तरोत्थ सर्ववर्णोत्पत्तेः अकारंविना तदसंभवात् । अकारएव सर्ववर्णानामुच्चारणकारणं यथा जयति । तथा अखिलं चराचरंजगत् । महेशपूर्वकं। महेशः पूर्वं नियतपूर्ववृत्तितयाकारणं यस्येति । जयतीति अकर्मकः । जिरुत्कर्षे वर्तते। कारणगत उत्कर्षः कार्ये उपचर्यते पूर्ववाक्यस्थितस्यैव जयतेरत्राप्यध्याहारादीपकम् । अनेन कार्यलिङ्गकानुमानेन ईश्वरसिद्धिस्तार्किकोक्ताऽनुसृता । वस्तुतस्तु तदुक्तानुमानेन कारणगतमेकत्वं न सिध्येत् । जगत्सृष्टेः महाकार्यतया गृहप्रासादादिनिर्माणवदनेकर्तृत्वापत्तेः । तथापि एकमेवाद्वितीयं । द्यावाभूमी जनयन्देव एकः ईश्वरश्चेतनः कर्ता पुरुषः कारणं शिवः । इत्यादि श्रुतिस्मृतिभ्यामीश्वरस्य जगत्कारणत्वं निष्प्रत्यूहमितिभावः ॥ ॥१॥

**समस्तशास्त्रचिन्तनैरहर्निशं च किं फलम् ।**
**महेशपादवन्दनं हृदापि नातनोति चेत् ॥२॥**

मोक्षहेतुज्ञानसाधनेषु भक्तेरभ्यर्हितत्वात्तामेव प्रथमकुसुमेन दशश्लोकीरूपेणादौ निरूपितवान् । तत्र पूर्वश्लोके चेतनाचेतनसर्वप्रपञ्च-

कारणतया ईश्वरस्य निरतिशयोत्कर्षवर्णनात् तत्परमानुरागरूपाया भक्ते रवतरणात् तादृशभक्तिसाध्यं भगवद्वन्दनमेव निरन्तरं निश्चलेन चेतसा कर्तव्यम् । तस्यैव सर्वशास्त्रश्रवणफलत्वात् । भगवद्भक्तिरहित केवल-शास्त्राभ्यासस्य निष्फलत्वमेवेति भावः ।

यस्तु महेशपादवन्दनं परमेश्वरपादसेवनं । हृदापि । मनसापि । अपि-शब्दः कायिकवाचिकयोर्निराकरणार्थः । नातनोति चेत् । न करोति-चेत् । अहर्निशं शास्त्रचिन्तनैश्च किं फलं । निरन्तरशास्त्रव्यासङ्गेन न किमपि फलं । निरन्तरशास्त्राभ्यासेन ईश्वरभक्तिरेव साध्येति भावः॥२॥

**हृदम्बुजैकवासिनः पदाब्जमाश्रयन्ति ये ।**
**अनश्वरा विभान्ति ते निरुत्तरे महापदे ॥ ॥३॥**

हृत्पुण्डरीकमध्यवर्तिनः परमात्मनः पदपङ्कजं ये भक्ता आश्रयन्ति । मनसा ध्यायन्ति । ते । निरुत्तरे निर्गतमुत्तरं यस्मात् तस्मिन् निरुत्तरे महापदे । सर्वोत्तरे, महतिपदे । तद्विष्णोःपरमं पदमिति श्रुतिप्रसिद्धे । अनश्वरास्सन्तः विभान्ति । महाफलत्वात् , परमात्मनो मानसिकमारा-धनं भक्त्या कुर्यादिति भावः ॥ ॥३॥

**प्रियाप्रियातिदूरगामहेशपादसेविनाम् ।**
**पुनर्भवोद्भवं भयं न संभवेत्कदाचन ॥ ॥४॥**

प्रियाप्रिययोः सुखदुःखयोः अतिदूरङ्गतस्य महेशस्य पादं ये सेवन्ते । शरीरेण नमन्ति । तेषां । कदाचिदपि पुनर्जन्मदुःखसंभवं भयं न सं-भवेत् । कायिकनमस्कारकर्तृणामपि पुनर्जन्मदुःखं न भवतीत्यभिप्रायः । मुक्ताभवन्तीतिभावः ॥ ॥४॥

**महातमःप्रवर्तिते हिताहिते न लिम्पतः ।**
**अनादिपूरुषस्तुतिप्रवर्तमानमानसम् ॥** ॥५॥

न विद्यते आदिः कारणं यस्य सः । प । कारणानाञ्चयोधाता ध्याता परमकारणम् । न संप्रसूयतेन्यस्मात्कुतश्चन कदाचन, इत्यादिशास्त्रात् । तादृशोऽयं पुरुषः । तस्यस्तुतौ गुणकीर्तने प्रवर्तमानमानसं । मनसः सर्वेन्द्रियकार्येषु कारणत्वात् मनोयुक्तवागिन्द्रियजन्यगुणकीर्तम तत्परं । महातमःप्रवर्तिते । अनाद्यविद्याविजृम्भिते हिताहिते सुखदुःखे न लिम्पतः । भगवद्गुणकीर्तनपरस्य जायमानज्ञानमहिम्नाऽज्ञाननाशात् । अज्ञानजन्यसुखदुःखे न संबध्नीत इत्यर्थः । मुमुक्षोर्दुःखवत्सुखमपि अज्ञानजन्यत्वाद्धेयमेव । अज्ञानं हि अहन्ताममतामूलं तदभावात् अहन्ताममता नाशात् शरीराभिमानरहितस्य भगवद्भक्तस्य सुखदुःखसंबन्धो नास्तीत्यर्थः । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' । इत्यादि शास्त्रात् ॥ ॥

**दृगादिपञ्चकोद्भवाशया वियोजितात्मना ।**
**प्रवर्तिते महापथे स्थिता विभान्ति सन्ततम् ॥** ॥६॥

दृक् चक्षुरिन्द्रियं आदिर्येषां तानि चक्षुर्जिह्वाघ्राणत्वक्श्रोत्राणि तेषां पञ्चकेन समुदायेन उद्भवन्ती यादृशी ऐन्द्रियकप्रत्यक्षगोचर रूपरसादिलिप्सा तया वियोजित आत्मायस्य सः । तथाभूतेन । वैषयिकलिप्साशून्येन महापुरुषेन । प्रवर्तिते महापथे । श्रुतिस्मृती ममैवाज्ञे इति भगवदुपदेशात् श्रौतस्मार्तरूपधर्ममार्गे स्थिताः । संततं विभान्ति । धर्मवृन्दसमाराधितपरमपुरुषप्रसादेनाऽविच्छिन्नदीप्तिमन्तो भवन्तीत्यर्थः । वर्णाश्रमाचारवता पुरुषेण परःपुमान् । विष्णुराराध्यते पंथा नान्यस्तत्तोषकारकः । इत्यादि शास्त्रात् ॥ ॥ ६ ॥

**निजोपमानशून्यकं यमामनन्ति सर्वथा ।**
**तदङ्घ्रिसेवकात्परैर्नचाधिरुज्झितुं क्षमा ॥ ७ ॥**

सर्वथा । येनकेनप्रकारेण । यम् , ईश्वरं निजोपमानशून्यकं स्वोपमानपदार्थान्तररहितम् । आमनन्ति, न तत्समश्चाभ्याधिकश्च दृश्यते, इति शास्त्रात् । तदंघ्रिसेवकात् परैः । तत्पादपद्मभजनविमुखैः । आधिः । मानसिकं दुःखं । उज्झितुं । न क्षमा । ईश्वरपादपद्मसेवकैरेव मानसिकं-दुःखं परिहरणीयमित्यर्थः ॥ ॥ ७ ॥

**सुधर्मसिंधुदेवतापदाब्जसेवकान्विना ।**
**तदुत्तरौ सुदुस्तरौ सदार्थकामसागरौ ॥ ॥ ८ ॥**

सुधर्मसिंधोः सर्वधर्माराधनीयस्य आराधकसमर्पित सर्वधर्म समुदायाश्रयस्य । य । यत्करोषि यदश्नासि यज्जुहोषि ददासियत् । यत्तपयासि कौन्तेय तत्कुरुष्व मदर्पणम् । इति भगवदुपदेशात् । देवस्य स्वार्थे देवात्तल् इति तल्प्रत्ययः। पदाब्जसेवकान्विना । सर्वधर्माराधनीय भगवत्पादभजनविमुखेन । तदुत्तरौ । धर्मार्थकाममोक्षेषु, मध्ये धर्मापेक्षयाउत्तरौ । उपरिष्टान्निर्दिष्टौ । अर्थकामसागरौ । सदा । सुदुस्तरौ । सन्तरणानर्हौ । भगवत्पादाब्जसेवकैरेव भगवत्प्रसादेन तरणार्हावित्यर्थः ॥

**गुणाष्टकैकमन्दिर प्रकृष्टदेववन्दने ।**
**वृथा शिरो नतं न चेत्सुसालभञ्जिकाङ्गवत् ॥ ॥ ९ ॥**

गुणाष्टकस्य स्वातन्त्र्यादिनिरतिशयानन्दान्तस्य आगमप्रसिद्धस्य अपहतपाप्मादि सत्यसंकल्पान्तस्य उपनिषत्प्रसिद्धस्य वा एकमन्दिरस्य प्रकृष्टस्य देवस्य वन्दने । शिरो नतं न चेत् । सालभञ्जिकाङ्गवत्।

वृथा । निरर्थकमित्यर्थः । भगवत्पादाब्जवन्दनमेव शिरस्सृष्टेःफलं । तदभावे वैयर्थ्यमेवासीदित्यर्थः । तत्रदृष्टान्तः । सालभञ्जिकाङ्गवदिति । सालभञ्जिकाङ्गं चक्षुरादि तत्तदवयवरूपं, रूपरसादिस्वस्वकार्याक्षमतया यथावृथा तथेत्यर्थः ॥ ॥ ९ ॥

**महेशपादपोतकावलम्बिनो नराश्चये ।**
**तरन्ति ते भवाम्बुधिं कदापि नेतरे जनाः ॥ ॥१०॥**

महेशस्य पाद एव पोतः स्वार्थेकः । तदवलम्बिनः ये नराः भक्ताः ते भवाम्बुधिं जननमरणात्मकसंसारसमुद्रं तरन्ति । इतरे जनाः । भगवत्पादपोतावलम्बनहीनाः । जनाः प्राकृताः न तरन्ति । किन्तु तत्रैव निमज्जन्तीत्यर्थः ॥ ॥ १० ॥

इति सुनीति कुसुममालायां भगवद्भक्तिरूपं
प्रथमं कुसुमम् ॥

வான்சிறப்பு — **वर्षमहिमा ॥**

---

**यतः सुवर्षजाज्जलाज्जगत्सुखेन जीवति ।**
**ततोऽमृताभिधां दधे तदत्रलोकघोषिताम् ॥१॥**

पूर्वं भगवद्भक्तिरूप धर्मनिरूपणं कृतम् । इदानीं तादृशभगवदाश्रयलोकानां धर्मार्थकामहेतुभूतवर्षणगुणकीर्तनार्थं द्वितीयं कुसुममारभ्यते ॥

यतः कारणात् । सुवर्षजात् । जलात् । अपेक्षितकाले यावदपेक्षं पर्जन्यवर्षणक्रियाजनितात् । जलात् हेतुभूतात् । जगत् ।

स्थावरजङ्गमरूप द्विविधशरीरसंस्थितो जीववर्गः । सुखेन । अनायासेन । जीवति प्राणधारणं करोति जीवप्राणधारणे इति धातुः । ततः कारणात् । तत् जलं । अत्र लोके । लोकघोपितां । सकलजनप्रसिद्धां अमृताभिधां अमृतमिति नामधेयं । दधे । "पयः कीलालममृतं" इत्यभिधानात् । तदमृतममराणां मरणराहित्यं तज्जीवनभूतामृतेनेति प्रसिद्धं । तद्वत् । अत्र भूलोके । जीववर्गस्य प्राणधारणं वर्षणजनितजलेनेति तज्जलमपि अमृतमिति प्रसिद्धमित्यर्थः ॥ ॥१॥

उक्तमर्थं विवृणोति ।

---

**बुभुक्षितस्य भक्षणं प्रकल्प्य सस्यपूर्वकम् ।**
**प्रयाति भक्ष्यतां जलं सुवृष्टिसंभवं स्वयम् ॥२॥**

अशानायापिपासे हि जीववर्गस्य महान्तौ रोगौ । तयोर्भक्षणं पानञ्च प्रतिदिनमौषधं । तदभावे स्वयं जीवनपरिलोपप्रसिद्धेः । वर्षणजनितं च फलं सस्यादि प्राणस्यान्नहेतुभूतं स्वयमपि पेयं भवतीति तपनपरिपंथिक्षुत्तृष्णापरिहारेण मरणनिवर्तकं भवतीत्यर्थः । पदार्थान्वयस्तु— सुवृष्टिसंभवं जलं । बुभुक्षितस्य भोक्तुमिच्छतः । इदं पिपासितस्याप्युपलक्षणं । भक्षणमुपलक्षितं प्राणं च सस्यादिप्रणाळ्या परिकल्प्य स्वयं भक्ष्यतां पेयतां प्रयाति । पानभक्षणयोर्नात्यन्तभेदः । अधोगळसंयोगस्य उभयतस्तुल्यत्वात् । अब्भक्षो वायुभक्ष इत्यादावपां पानेऽपि भक्षतेः प्रयोगात् । एवमन्वयेन जलस्य जीवनहेतुत्वमुपपाद्य व्यतिरेकेणोपपादयति । ॥२॥

**न नीरदश्च कालतो जलं ददातिचेद्ध्रुवम् ।**
**प्रजाः क्षुदत्र नाशयेज्जलेशमेखलान्तरे ॥३॥**

किञ्च । नीरदः । कालतः काले सार्वविभक्तिकस्तसिः । जलं न ददाति चेत् । न वर्षति चेत् । अत्र जलेशमेखलान्तरे महासमुद्रपरिवारितभूमण्डले । क्षुत् कर्त्री । प्रजाः जीववर्गं । नाशयेत् । शरीराद्वियोजयेत् । अतो जीववर्गस्य शरीरस्थितेः वर्षणजनितं जलमेव हेतुभूतमित्यर्थः ॥ ॥३॥

**सुवृष्टिरेतिचेत्क्षयं वसुंधरासु सर्वतः ।**
**तदातु कर्षका भुवं हलेन कृष्टुमीशते ॥४॥**

क्षुधः भक्षणालाभप्रयुक्ततया भक्षणस्यच कृषिजन्यसस्यजन्यान्नलाभप्रयुक्ततया मूलकारणकृषेः पर्जन्यजनितवर्षणप्रयुक्ततया वर्षणस्य क्षये कृषिनाशादन्नलाभाभावेन पूर्वश्लोकप्रदर्शितक्षुधः जीवनपरिलोपकत्वं युक्तमित्यर्थः । अन्वयस्तु । सर्वतो वसुंधरासु । वृष्टिः । अपेक्षितकाले वर्षणं । क्षयं अभावं । एतिचेत् । तदा वर्षणाभावकाले । कर्षकाः कृषीवलाः । भुवं सस्यजननीं । कृष्टुं । कर्षणेन संस्कर्तुं । नेशते तु । असमर्था भवन्तीत्यर्थः ॥ ॥४॥

**सुदीनभावसंगतिं तनोति या चिरायिता ।**
**अदीनतां प्रजासु सा तनोति वृष्टिरेधिता ॥५॥**

या वृष्टिः । चिरायिता सती । अपेक्षितकाले विलंबिता प्रजासु । सुदीनभावस्य अत्यन्तदीनतायाः सङ्गतिं संबन्धं । तनोति । विस्तारयतीत्यर्थः । एतावन्महिमशालि वर्षणमिति तन्महिमा व्यज्यते । एवं बहिःप्रज्ञस्य जीववर्गस्य जीवनहेतुभूतं वर्षणमित्युपपाद्य अन्तःप्रज्ञानां वृक्षतृणाङ्कुरादीनामपि जीवनं वर्षणाभावेन स्यादित्याह ॥ ॥५॥

**सुवर्षवारिबिन्दवो न यान्ति चेन्महीतलम् ।**
**तृणाङ्कुरादिकं स्फुटं न दृश्यतां प्रयाति हि ॥६॥**

शोभनवर्षणोदबिन्दवः । महीतलं । न यान्तिचेत् न प्राप्नुवन्ति चेत् तृणादीनामङ्कुरादिकमपि । स्फुटं । दृश्यतां । न प्रयाति हि । किञ्चिदपि बहिर्दृश्यभावं नाप्नोति । उत्पन्नमपि अपेक्षितकालिकवर्षबिन्दुपतनाभावेन नश्यतीर्थः । किं बहुना । सर्वमहोदकनिदानस्य महोदधेरपि रत्नाकरतादिभावः न संभवतीत्याह ॥ ॥६॥

**घनः समुद्रशीकरं प्रपीय चेन्नवर्षति ।**
**तदातु रत्नशेवधेः स्वभाव एव नश्यति ॥७॥**

घनः । पर्जन्यः । समुद्रस्य शीकरं प्रपीय न वर्षतिचेत् । समुद्र एवनोत्सृजतिंचेत् । तदेव । रत्नशेवधेः रत्नाकरस्य । स्वभावतापि । रत्नाकरत्वमपि नश्यतीत्यर्थः । अपिशब्दः अनुक्तमत्स्यादिसमुच्चयार्थः । बलाहकवर्षणजनितोदबिन्दूनां शुक्तिषु निपतनेन मौक्तिकरत्नोत्पत्तेः । प्रसिद्धत्वात् तदभावे तदभावात् रत्नाकरत्वं भज्यतेत्यर्थः । तदुक्तं । यदाह मुरारिः । प । "आदाय शुक्तिषु बलाकाविप्रकीर्णैः रत्नाकरो भवति वारिभिरम्बुराशिः"। इति ॥ किञ्च देवानामपि वर्षणजनितसस्यादि वृद्ध्यभावे तृप्तिहेतुभूतनित्यनैमिकपरिलोपापत्त्या सर्वधर्माणामपि लोपइत्याह । घनेति ॥ ॥७॥

**घनो न वर्षतीह चेदमर्त्यलोकवासिनाम् ।**
**महोत्सवश्च नित्यशः प्रपूजनं च नैधते ॥८॥**

इह, भूलोके । घनः, पर्जन्यः । न वर्षतिचेत् । उदकं नोत्सृजतिचेत् अमर्त्यलोकवासिनां । देवानां । महोत्सवः । महाक्रतुजनितः

संतोषश्च । नैधते । नवर्धते । किञ्चागमविहितापूजा नैमित्तिकोत्सवादि-कमपि नैधते तस्मात् सर्वलोकस्थितिरपि वर्षणमूलकैवेति भावः ॥८॥

**तपश्च दानमेवच प्रणाशमेव यास्यति ।**
**इळान्तरं वलाहको न शीतलं करोति चेत् ॥९॥**

वलाहकः । पर्जन्याभिमानिदेवता । इळाया भुवोऽन्तरं । शीतलं । सस्योत्पत्तिसमर्थं । न करोतिचेत् । तपश्च । वानप्रस्थादीनामिन्द्रिय निग्रहार्थं कृच्छ्र चान्द्रायणादिकं । दानं । गृहाश्रमिणामितराश्रमोपकार-कभिक्षादानादिकं । प्रणाशमेव । सर्वात्मनाऽभावमेव । यास्यति । एव-कारेण तपसोऽनशनरूपस्य प्रणाशासंभवेऽपि दानस्य प्रणाशः संभव-त्येवेति अयोगव्यावृत्तिःक्रियते । वस्तुतस्तु । अनशनमपि अन्नालाभ प्रयुक्तं न तपः । किन्तु वृद्धिह्रासनियमयुक्तं भक्षणमेव । तदुक्तं वाच-स्पतिमिश्रैः । तपसानाशकेनेति व्याख्यावसरे । “ अनशनं च हितमित मेध्याशनं । नतु सर्वथा भोजननिवृत्तिरिति ” । तस्मादुभयमपि अन्न-लाभाभावे प्रणश्यत्येवेत्यर्थः । महात्मनामपि महात्मनामूलं जलमेव । नहि जलमन्तरा किञ्चिदपि वर्णाश्रमकार्यं सिध्यति । अन्तत आच-मनस्य सर्वकर्माङ्गत्वादित्याशयेनाह ॥ ॥९॥

**स्वधर्मनिष्ठता सतां जलं विना भवेन्नहि ।**
**जलस्रुतिश्च नैधते तथाऽभ्रवर्षणं विना ॥१०॥**

सतां अनीदृशमहिमशालिनामपि । स्वधर्मनिष्ठता । तत्तद्वर्णाश्रमो-चितधर्मानुष्ठातृता । जलं विना न भवेद्धि । तथा । यथास्वधर्मनिष्ठता जलं विना न भवेत् तथाऽभ्रवर्षणं विना । जलानां स्रुतिः । प्रस्रवणं च । नैधते । नवर्धते । अभ्रवर्षणात् संतत नदी नदतटाकवापी कूपादि

जलाशयगतोदकप्रवृध्या वसिष्ठविश्वामित्रादिमहामुनीनामपि तत्तादृश महिमातिशयादिति भावः ॥ ॥१०॥

इति द्वितीयं कुसुमम् ॥

## 3. கீர்த்தார் பெருமை. **महामुनिमहिमा ॥**

---

**स्वधर्मशीलनक्रमादहंममत्वमुत्सृजन् ।**
**महानिति प्रगीयते समस्तशास्त्रपारगैः ॥१॥**

पूर्वं लोकानां धर्मार्थकामहेतुभूतं वर्षणमिति तत्प्रशंसयावगतं । तत्कार्यभूतधर्मार्थकामानां स्वरूपसाधनक्रमादिकं महामुनिप्रणीतं धर्मार्थ कामशास्त्रायत्तमिति तादृशमुनिप्रशंसया अवगमयितुं तृतीयं कुसुमं महर्षिप्रशंसार्थमारभ्यते । तत्र ऋषीणां महत्वमुपपादयति । आद्यः श्लोकः॥

स्वधर्मशीलनक्रमात् । स्वधर्माः । वर्णाश्रम विहितधर्माः । तेषांशील नक्रमात् । अनुष्ठानपरंपरातः । अहम्ममत्वम् । उत्सृजन् । पुरुषः । महानिति । समस्तशास्त्रपारङ्गतैः । प्रगीयते । प्रकर्षेण स्तूयते इत्यर्थः । तत्रक्रमो यथा । स्ववर्णाश्रमविहिताचारनिष्ठया धर्मवृद्धिः । धर्मवृध्या पापपरिहारः । तत्परिहारेण मनोगतमालिन्यनिवृत्तिः । तन्निवृत्या नित्यानित्यवस्तुविवेकः तेन च नश्वरैहिकामुष्मिकफलभोगवैराग्यं । तेन च संसारदुःखनिवृत्तीच्छा । तया मुमुक्षा । तयाच जननकारणीभूतप्रवृत्तिमार्गनिवृत्तिपूर्वकविमोक्षकारणयोगनिष्ठा । तयाच तत्वज्ञानोत्पत्यांचार्थेषु ममता शरीरादावहंताच निवर्तते । इति सर्वशास्त्रपारगाणां मुनीनां सम्मानहेतुभूताहन्ताममतापरित्यागार्थमेव शास्त्रेषु तत्त-

द्दर्मविधानात् । तादृशमहामुनितात्पर्यपर्यालोचनया तदर्थानुष्ठानेना हन्तादिपरित्याग एव पुरुषाणां महिमेति भावः ॥ ॥१॥

**अहंममत्वशून्यहृन्महत्व वर्णने स्पृहा ।**
**विनष्टजन्तुनिर्णयेच्छया समा भवेत्स्फुटम् ॥२॥**

अहम्ममतारहितहृदयानां महत्ववर्णने । एतावन्महत्वमिति महिम निर्णयार्थं विचारे या स्पृहा । एतावन्तो जन्तवो विनष्टा इति निर्णयेच्छया । निर्णयार्थं विचारेच्छया समा भवेत् । स्फुटं, असंशयं । महिम्नामपारतया निर्णेतुमशक्तेरित्यर्थः ॥ ॥२॥

**भवापवर्गयोर्द्वयोर्विविच्य दुःखतत्परे ।**
**भवप्रहाणहेतवे त्यजन्गृहं महान्भवेत् ॥३॥**

भवापवर्गयोः संसारमोक्षयोः द्वयोः । दुःखतत्परे। दुःखं च तत्परंच दुःखतत्परे तस्मात् दुःखात् परं भिन्नं सुखमित्यर्थः । दुःखसुखे । क्रमेण विविच्य । भवेदुःखं मोक्षे सुखंच निश्चित्य । संसारपरित्यागकारणाय । गृहाश्रमं त्यजन् । ऊर्ध्वरेतसामाश्रमं प्रविशन् । महान्भवेत् । गृहाश्रम-परित्यागात् शमदमादिभूयिष्टमुत्तमाश्रमं प्रविशन् महानिति लोकैः प्रस्तूयत इत्यर्थः । अनेन श्लोकत्रयेणाहंताममताशून्यमहामुनिमहिमा सर्वोत्कृष्ट इति प्रतिपादितः ॥ ॥३॥

**विवेकतोत्रधारणाद्वशीकृताक्षसिन्धुरः ।**
**प्रयाति मोक्षभूतले प्रकृष्टबीजतापदम् ॥४॥**

विवेक एव तोत्रं अंकुशः तस्य धारणात् इन्द्रियाणां स्वस्वविषय प्रवेशे दुःखं तदभावे सुखमिति विवेक एव इन्द्रियगजानां स्वस्वविषयेषु

यथेष्टसंचारनिवर्तकतयांऽकुशं । तद्धारिणा पुरुषधौरेयेण वशीकृता स्वायत्तीकृता अक्षा एव सिंधुरा गजा येन सः तथोक्तः । इन्द्रियाणि विषये भ्यो निवृत्याऽऽत्माभिमुख्यं संपादयन् । मोक्षभूतले मोक्षनाम्नि केदार-खण्डे । प्रकृष्टबीजता उत्कृष्टबीजभावः । तदेव पदंस्थानं । प्रयाति बीजं यथा भूतले उप्तं सत् वर्धते । एवं स मोक्षं प्रविश्य निरतिशयानंदरूपतया वर्धत इत्यर्थः । सावयवरूपकम् ॥ ॥४॥

**वशीकृतेन्द्रियात्मानां महिम्नि देवलोकराट् ।**
**मुनिप्रकोपभाजनं भवन् सुसाक्ष्यमर्हति ॥५॥**

वशीकृतेन्द्रियात्मनां । इन्द्रियाणि चक्षुरादीनि पञ्च । तन्नियामक आत्मा मनश्च वशीकृता यैस्ते तथाभूताः गौतमागस्त्यदुर्वासःप्रभृतयः तेषां । महिम्नि विषये । देवलोकस्य राट्राजा । मुनिप्रकोपभाजनं । महामुनीनां गौतमादीनां प्रकोपस्य कोपातिशयस्य भाजनं विषयोभवन् सुसाक्ष्यं साक्षिणोभावः साक्ष्यं सम्यक् साक्ष्यं सुसाक्ष्यं साक्षाद्दृष्टृत्वं तद्वान् महिमविषयसमीचीनभावं । अर्हति प्राप्नोति । गौतमशापेन देवेन्द्रो निर्वृषणो बभूव । अगस्त्यशापेन नहुषः देवलोकपतिः सन्नपि वाहसभावं प्राप्तः । तथादुर्वासश्शापेन त्रैलोक्याधिपत्यमदं जहावित्यादि पुराणकथाऽनुसंधातव्या ॥ ॥५॥

**यमादियुक्तयोगतो वशीकृतं मनस्तु यैः ।**
**महान्त एव ते परे भवेयुरल्पताजुषः ॥६॥**

वर्तमानकालवर्तिनामपि जनानां मध्ये अयं महानयमल्प इति व्य-वस्थायां कोहेतुरितिचेत् तदुपपादनार्थमयंश्लोकः । यैरेवं मनः यमादि-युक्तयोगतः यमनियमासनप्राणायामप्रत्याहारधारणध्यानसमाधिरूपाष्टाङ्ग

सहितयोगेन चित्तवृत्तिनिरोधेन सार्वविभक्तिकस्तसिः । वशीकृतं । स्वायत्तीकृतं । तएव महान्तः एवकारो भिन्नक्रमः । परे तेभ्यो भिन्नाः। स्वस्वविषयप्रवर्तमानपञ्चेन्द्रियर्थव्यापारप्रयुक्तरागद्वेषादिकलुषीकृत मनो-वशीकृताः । अल्पताजुषः । अल्पताभाजः । भवेयुः । वशीकृत-मनस्कत्वं मनोवशीकृतत्वं च महत्वाल्पत्वयोर्हेतुरित्यर्थः ॥ ॥६॥

**ध्वनिप्रमुख्यपञ्चकस्वरूपकार्यवेदिनि ।**
**विभाति लोकमण्डलं ततः परं न किञ्चन ॥७॥**

ध्वनिः शब्दतन्मात्रा प्रमुख्यः प्रथमः येषां ते ध्वनिप्रमुख्याः स्पर्श-रूपरसगंधाः । तद्गुणसंविज्ञानो बहुव्रीहिः । तेषां पञ्चकं । तन्मात्रापञ्चकं तत्स्वरूपं तत्कार्यं च । तद्वेदिनि । तद्विवेचनकारिणि पुरुषे । लोकमण्डलं लोक्यन्ते दृश्यन्त इति लोकाः। तत्वानि प्रकृत्यादीनि तेषां मण्डलं समूहः। विभाति । ततःपरं । भिन्नं । न किञ्चिदस्तीत्यर्थः । अयंभावः । सांख्यमते तावत् अनादिर्नित्या सर्वजगत्कारणत्वात्प्रकृतिरुच्यते । तत्कार्य भूतमहदहंकारपञ्चतन्मात्राश्च मूलप्रकृतिविकाररूपतया भूतेन्द्रियादि प्रकृ-तितयाच विकृतय इत्युच्यन्ते । तन्मात्राकार्याणि । चक्षुरादि पंचेन्द्रियाणि । रूपादिविषयाः पञ्च । पृथिव्यादयःपञ्चभूतानि । आहत्य पञ्चदश । मन-श्चेति षोडशकः । षोडशिभिः स्वप्रकृतिसमुदायिभिरारब्धस्समुदायः । पदार्थान्तराकारणतया तन्मात्राकारणकत्वाच्च केवलविकृतयउच्यन्ते । आ त्मातु पञ्चविकृतिस्वशून्यः। तदुक्तं । "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृति विकृतयः सप्त । षोडशकश्च विकारः न प्रकृतिर्नविकृतिः पुरुषः" । इति एवञ्च चतुर्विंशतिपदार्थसमुदायरूप एव लोकः । तद्विवेचनशालिनि पुरुषे पञ्चविंशे विभाति । ततःपरं । पञ्चविंशति तत्वभिन्नं । नकिञ्चिदित्यर्थः ।

विवेकतोत्रधारणादित्यादि श्लोकचतुष्टयेन महत्वकारणमिन्द्रियनिग्रहः योगनिष्ठा साङ्ख्यतत्वज्ञानंच प्रतिपादितम् ॥ ॥७॥

**महामुनिप्रयुक्तवाक्प्रमाणभावनिर्णयम् ।**
**तदुक्तमंत्रराशयो वदन्ति सत्फलावहाः ॥८॥**

महामुनिभिः प्रयुक्ताया वाचः स्मृतिरूपायाः प्रमाणभावस्य प्रामाण्यस्य निर्णयं निश्चयं । तदुक्तमंत्रराशयः । विश्वामित्रादिमंत्रद्रष्टृभिरुपदिष्टमंत्रराशयः गायत्रीप्रमुखाः सत्फलावहाः । विद्यमानफलकाः । इदानीं तनानामपि निग्रहानुग्रहफलजनकाः सन्तो वदन्ति । अनुमापयन्तीत्यर्थः॥

**महागुणाचलोपरि प्रतिष्ठितात्मशालिनाम् ।**
**अपि क्षणेन नश्वरं न कोऽपि कोपमुत्तरेत् ॥९॥**

महान्तो येगुणाः शौचमत्यार्जवत्यागादय आत्मगुणा इति प्रसिद्धाः । तएवाचलाः अचलवदचञ्चलत्वात् । तदुपरिप्रतिष्ठित आत्मा मनस्तेन-शालिनः शोभमानाः तेषां (अष्टौ) निश्चलात्मगुणवतामित्यर्थः तेषां । क्वचिदपि कोप एव न संभवेत् । तथा जातश्चेदपि क्षणमेव तिष्ठेत् । दयादिगुणप्राबल्यात् क्षणेन नश्वरमपि जातं महात्मनां कोपं । कोपि । कोपविषयीभूतः नोत्तरेत् । कोपं निरोद्धुं । फलरहितं कर्तुं शक्नुयादित्यर्थः॥

**अलङ्घनीयशासना अपीदृशा महाशयाः ।**
**समस्तजीवराशिषु स्वतो दयां वहन्ति हि ॥१०॥**

श्लोकद्वयेन महात्मनामाज्ञा ऽनुल्लङ्घनीयेत्युक्तम् ।

अलङ्घनीयशासना अपि । अनुल्लङ्घनीयाज्ञावन्तोऽपि एवंविधा महाशयाः । महनीयप्रज्ञाः समस्तजीवराशिषु । दयां । करुणां । स्वतो वहन्ति हिः प्रसिद्धौ ॥१०॥ इति तृतीयं कुसुमम् ॥

## 4. அறன்வலியுறுத்தல் धर्ममहिमा ॥

**सुखाब्धिमोक्षदायिनः सुराधिपत्यदादपि ।**
**सुधर्मसङ्ग्रहादृते नृणां किमत्र तारकम् ॥१॥**

अत्र । भूलोके । नृणां । ब्राह्मणादीनां । सुराधिपत्यदात् । अधिपते-र्भावः आधिपत्यं "पत्यन्त पुरोहितादिभ्योयक्" सुराणामाधिपत्यं । नियामकत्वं । तत्प्रदात् । शताश्वमेधादेः । वैषयिकभोगेषु महेन्द्रभोगस्य परमावधित्वात् । तथा सुखाब्धिमोक्षदायिनोऽपि । मोक्षस्यानश्वरनित्य-निरतिशयसुखतया सुखसमुद्रायमाणमोक्षदायिनोऽपि । धर्मेण पापमप-नुदति इति नित्यनिरभिसंधि नित्यकर्मानुष्ठानरूपधर्मस्यापि विविदिषादि प्रतिबंधक चित्ताश्रितरागद्वेषादिमालिन्यपरिहारेण विविदिषाद्युत्पादनेन प्रणाड्या मोक्षदायिनोऽपि । धर्मसंग्रहात् । तत्तदाश्रमविहित परोत्साद-नादिफलरहितावश्यकाग्निहोत्रदर्शपूर्णमासादि नित्यकर्मानुष्ठानात् । ऋते । "अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते" इति ऋते योगे पञ्चमी । तद्भिन्नं किं तारकं ? । संसारतारणसमर्थं न किमपीत्यर्थः । तस्मात् कृत्रिमाकृत्रिमसुखद्वयसाधनत्वाद्धर्मसंग्रह एवाभ्यर्हित इत्यर्थः ॥ ॥१॥

**स्वधर्मसङ्ग्रहात्परं सुखप्रदं नृणां नहि ।**
**प्रमादतद्विमोचनात्परं न दुःखदायकम् ॥२॥**

स्वधर्मसंग्रहात् । स्ववर्णाश्रमविहितधर्मानुष्ठानात् परं । भिन्नं । नृणां । मनुष्याणां । सुखप्रदं नहीतिपूर्वश्लोकोक्तमनुवाद्य, प्रमादतद्विमोचनात् । तस्य विमोचनं तद्विमोचनं प्रमादेन तद्विमोचनं प्रमादतद्विमोचनमित्यत्र 'तृतीया तत्कृतार्थेने' ति तृतीयातत्पुरुषः । मोहाधीनस्वधर्मपरित्यागो नशास्त्रीयः । तस्मात् परं दुःखदायकं नेति तस्यैव दुःखहेतुत्वं विधीयते॥२॥

निजाश्रमोचितप्रकारतः सदा त्रिकारणैः ।
चिनोतु धर्मसन्ततिं यथास्वशक्ति सादरम् ॥३॥

स्वधर्मपरित्यागस्य प्रत्यवायजनकत्वात् अवश्यं स्वकर्म कर्तव्यमित्याह। निजेति । निजाश्रमोचितप्रकारतः । स्वस्ववर्णाश्रमेषु संभावितप्रकारेण गृहस्थस्य धनव्ययादिना वनस्थस्य कायक्लेशादिना यतेः ध्यानादिना । सदा । निरन्तरं । त्रिकारणैः । मनोवाक्कायैः । धर्मसन्ततिं । यथास्वशक्ति । स्वशक्तिमनतिक्रम्य । आदरेण श्रद्धया सहितं यथा तथा । चिनोतु । संपादयेदित्यर्थः ॥ ॥३॥

मनःप्रवृत्तिपूर्वकं कृतं हि धर्मतामियात् ।
ततःपरंतु वाचिकंच कायिकंच डाम्भिकम् ॥४॥

मनोवाक्कायकरणत्रयमध्याद्धर्मसन्ताने मनःसर्वत्रमुख्यकारणमित्याह मन इति । मनःप्रवृत्तिपूर्वकं यत्कृतं । मनस्समाधानपूर्वकं यत्कर्म क्रियते। तदेव । धर्मतां । अलौकिकश्रेयःसाधनतां । इयात् । प्राप्नुयात् । ततःपरं । पूर्वोक्तमनःसमाधानपूर्वकृतभिन्नं । असमाहितमनसा कृतं । यत् केवलवाक्कृतं केवलकायकृतञ्च । डांभिकं । परप्रतारकमेव नतु श्रेयःसाधनमित्यर्थः ॥ ॥४॥

अमर्षणं गुणस्पृहा प्रकोपनं च दुर्वचः ।
मनोमलं विनाऽमुना कृतं तु धर्मतास्पदम् ॥५॥

धर्मानुष्ठाने मनःप्रवृत्तिश्च प्रतिबन्धकामर्षरागद्वेषादिमनोमल निराकरणेन भवतीत्याह । अमर्षणेति । अमर्षणं । परोत्कर्षासहिष्णुत्वं। गुणस्पृहा । ऐन्द्रियकविषयेच्छा । तदलाभप्रयुक्तं प्रकोपनं । तत्प्रयुक्तदुर्भाषणञ्च । मनोमलंसत् । कृत्यप्रतिबन्धकं । अमुना । मनोमलेनविना यत्कृतं तदेव । धर्मतास्पदं । श्रेयःसाधनमित्यर्थः ॥ ॥२॥

**पुरःपुरः करिष्यते सुकृत्यमित्यभावयन् ।**
**करोति यत्पुरात्र तत्परं सहायतामियात् ॥६॥**

श्लोकद्वयेन धर्मानुष्ठानस्वरूपमुक्तं । तादृशञ्च धर्मानुष्ठानं कस्मिन् काले कर्तव्यमित्याकांक्षायामाह । पुर इति । सुकृत्यं इदानीं बाल्ययौवनप्राप्त्यनन्तरं करिष्यामः । पुरःपुरः । पश्चात्पश्चात् । करिष्यत इत्यभावयन् । मृतेःपुरायत्सुकृत्यं करोति । तत्र । यत्तदोर्नित्यसंबन्धात् । परं । मृतेरनन्तरं । सहायतां । मृतस्य सहायभावं । परलोकोपगमने महोपकारकत्वं । इयात् । प्राप्नुयात् । ' धर्म एकःसहायः गच्छन्तमनुगच्छतीं'ति आप्तोपदेशात् । न कृतञ्चेत् । ' किमहं साधुनाकरवमिति पश्चात्तापो भविष्यतीत्यभिप्रायः ॥ ॥६॥

**सहायता हि कर्मणां न चागमैकमूलिका ।**
**सुदण्डिकास्थितोऽपि तद्वहाश्च तत्प्रदर्शकाः ॥७॥**

जीवदवस्थायां कृतस्य सुकृतस्य पारलौकिकफलजनकताच आगमैकमूलत्वात् कथं प्रत्येतव्येत्याशङ्कायामाह । सहायेति । कर्मणां । सुकृतानां । सहायता । फलजनकताच । नागमैकमूलिका । आगममात्रमूलिका न भवति । किन्तु । तत्र प्रत्यक्षमपि प्रमाणमित्याह । सुदण्डिकास्थितोपीति । शोभनदण्डिकायां स्थितोपि । तद्वहाश्च तस्यां दण्डिकायां वहाश्च । तत्प्रदर्शकाः । तस्यकर्मफलावश्यंभावस्य प्रदर्शकाः । फलानुभवप्रत्यक्षबोधकाः । शिबिकास्थितिः तद्वहनञ्च सुकृतदुष्कृतफलं प्रत्यक्षतोऽनुभूयमानं आगमप्रामामाण्यस्थापकमित्यर्थः । अत्र सुकृतफलमात्रस्य प्रक्रान्तत्वेऽपि न्यायतौल्यात् दुष्कृतफलमपिदृष्टान्तार्थमुपात्तम् । शिबिकावस्थितिजन्यं सुखं तद्वहनजन्यं दुःखञ्च पूर्वकृत सुकृतदुष्कृत प्रयुक्तमेवेत्यभिप्रायः ॥ ॥७॥

**अवश्यकार्यकर्मणामनुष्ठितिर्निरन्तरम् ।**
**भविष्यतो हि जन्मनः शिलाऽध्वनः पिधायिनी ॥८॥**

अवश्यं कार्याणि कर्तव्यत्वेन विहितानि यानि कर्माणि अग्निहोत्रादीनि तेषामकरणे प्रत्यवायोत्पत्तेः शास्त्रबोधनात् तेषां निरन्तरं उत्तरकालेऽव्यवधानेन । अनुष्ठितिः । अनुष्ठानं । भविष्यतः । आगमिष्यतः । जन्मनः । सुकृतदुष्कृतफलभूतसुखदुःखानुभवकालस्य । अध्वनः पिधायिनी मार्गस्य प्रतिबन्धिका शिलाभवति । तादृशकर्मानुष्ठानेन, "धर्मेणपापमपनुदतीति" शास्त्रप्रामाण्यात् पापपरिहारात् प्रतिबन्धकाभावेन विविदिषोत्पत्यादिना ज्ञानोत्पत्या ॥ 'ज्ञानाग्निःसर्वकर्माणि भस्मसात्कुरुते तथे'ति भगवदुपदेशात्, सञ्चितागामिकर्मनाशात् कारणाभावेन, जन्मान्तरं न भविष्यति । इहैव मुच्यत इत्यभिप्रायः ॥ ॥८॥

**अहेयधर्मसंहितापरायणस्य नित्यशः ।**
**सुखं च कामजं तथा यशश्च वर्धते भृशम् ॥९॥**

अहेया हातुमयुक्ता ये धर्मा नित्यनैमित्तिकादयः तेषां संहितः अतिशयितः सन्निधिः निरन्तरमनुष्ठानं सैव परमयनं मुख्यं शरणं यस्य स तथा निरन्तरनित्यकर्मानुष्ठाननतत्पर इत्यर्थः । तस्य । नित्यशः कामजं सुखं । ऋतुगमनादिजन्यं सुखं । सुधार्मिक इति यशश्चभृशं वर्धत इत्यर्थः । अन्यस्यतु अधार्मिकस्य परस्त्रीगमनादिप्रसिद्धेर्भाविदुःखहेतुतया कामजं तात्कालिकं सुखञ्च दुःखमेव अधार्मिक इत्ययशश्च बहुळीभवतीत्यभिप्रायः ॥ ॥९॥

**नरस्तु शास्त्रचोदितं सुधर्ममाचरेन्मुदा ।**
**कदापि न स्मरेत्तथा निषिध्यमानमागमैः ॥१०॥**

हेयमुपादेयञ्च किमित्याकांक्षायामाह । नर इति । नरः । कर्माधिकारी । शास्त्रचोदितं । शास्त्रविहितं सुधर्मं परोत्सादनादिफलप्रयुक्ततामसत्वादिरहितं । मुदा । सन्तोषेण । आचरेत् । अनुतिष्ठेत् । तथाऽऽगमैर्निषिध्यमानं । निवार्यमाणं कळञ्जभक्षणादि । कदापि न स्मरेत् । न कुर्यात् ॥ ॥१०॥

इति चतुर्थं कुसुमम् ॥

5. (இல்லறவியல்) இல்வாழ்க்கை **गार्हस्थ्यम् ॥**

**सहैव भार्यया गृहे वसन्नरः पराश्रमान् ।**
**वनस्थवर्णिभिक्षुकान्प्रपालयन्सखोच्यते ॥१॥**

पूर्वाधिकारे धर्मोत्कर्षः प्रतिपादितः, तादृशधर्मानुष्ठानञ्च द्विविधं भार्यासाहित्यतद्राहित्याभ्यां, गृहस्थस्य सर्वोपकारकत्वेन धर्मोत्कर्षवर्णनानन्तरमेव तद्धर्मप्रशंसार्थं पञ्चमकुसुमप्रारम्भः ।

तत्र गृहस्थस्यान्योपकारकत्वमुपपादयति सहेति । भार्यया सहैव गृहे वसन् , 'गृहस्थस्सदृशीं भार्यां विन्देदि'तिस्मृत्या सवर्णभार्याधिगमानन्तरमेव गृहस्थतोक्तेः भार्यासाहित्यस्यायोगव्यावर्तनार्थमेवकारः । नरः , कर्माधिकारी । पराश्रमान् , परः आश्रमः येषां ते तथा तानेव विवृणोति वनस्थेति । वनेतिष्ठन्तीति वनस्थाः, आयुषस्तृतीयभागे वृत्ते रजसि अग्निभार्याभ्यां वनं प्रविश्य, अवश्यकर्माणि कुर्वन्तः कायक्लेशप्रधानाः द्वन्द्वसहनवन्तस्तपोनिष्ठा उच्यन्ते । वर्णिनो नैष्ठिकोपकुर्वाणभेदेन द्विविधाः । भिक्षुकाः कुटीचकबहूदकहंसपरमहंसभेदेन चतुर्विधाः । एतान्सर्वानपेक्षितान्नपानवस्त्रशयनादिप्रदानेन प्रकर्षेण पालयन् तेषां सखा सहाय इत्युच्यते ॥ ॥१॥

**स्वबन्धुभिर्निराकृतान्स्वतो दरिद्रतां गतान् ।**
**अनाथकान्मृतान्गृही यथोचितं च पालयन् ॥२॥**

किञ्च । स्वबन्धुभिः संरक्षणाधिकारिभिः । निराकृतान् परित्यक्तान् अरक्षितानित्यर्थः । तथा स्वतः स्वभावत एव दरिद्रतां दुर्गतिं गतान् अनाथकान् मृतांश्च यथोचितं वस्त्रान्नदानादिभिः, अनाथमृतानां संस्कारोदकदानादिभिश्च प्रपालयन् मस्वोच्यत इति पूर्वेणान्वयः ॥ श्लोकद्वयेन गृहस्थाश्रमस्य सर्वोपकारकत्वमुक्तम् ॥ ॥२॥

**पितृन्सुरान्तथातिथीन्स्वबान्धवान्सहात्मना ।**
**प्रपूजयन्गृहाश्रमी स मुख्यधर्म उच्यते ॥३॥**

पितृदेवातिथिबन्धुपूजनोत्तरमात्मनो भोजनविधानात् आत्मनोऽप्राधान्यं सहशब्देनद्योतयति । 'सहयुक्तेऽप्रधाने' इति स्मृतेः । तदुक्तमन्नगीतायां 'योमामदत्वा पितृदेवताभ्योभृत्यातिथिभ्यश्च सुहृज्जनाय । सम्पन्नमश्नन्विषमत्तिमोहात् तमद्म्यहं तस्य च मृत्युरस्मि । हुताग्निहोत्रःकृतवैश्वदेवः पूज्यातिथीन्भृत्यजनावशिष्टम् । तुष्टश्शुचिश्श्रद्दधदत्तियोमां तस्यामृतं स्याममृतं भुनक्ति ॥' इति । सः, पितृदेवादिपूजनं विधेयाभिप्रायं पुंस्त्वं । मुख्यधर्मः, गृहाश्रमनिष्ठस्य प्रशस्तधर्म इत्यर्थः ॥ ॥३॥

**भयेन सम्यगार्जितं स्वमन्नमादराद्गृही ।**
**विभज्य शिष्टभोजनो भवेत्स्ववंशवर्धनः ॥४॥**

गृही, गृहस्थाश्रमी । भयेन, पापभीत्या । सम्यक्, शास्त्रविहित प्रशस्तमार्गेण । आर्जितं, संपादितम् । स्वं, स्वकीयमन्नं । विभज्य, पितृदेवातिथिबन्धुवनस्थब्रह्मचारिसन्यासिदरिद्रानाथादिभ्यः यथाशक्ति

दत्वा। शिष्टभोजनः, अवशिष्टान्नभोजनवान् । स्ववंशवर्धनः भवेत् । एवंविधस्य कदापि सन्तानहानिर्नभवेदित्यर्थः ॥ ॥४॥

**स्वदाररागधर्मवान् गृहाश्रमो भवेद्यदि ।**
**फलेग्रही भवेदयं महागुणस्समेधते ॥५॥**

स्वदार रागधर्मवान् , स्वस्यदाराः स्वदाराः स्वदारेषु रागः स्वदाररागः स्वभार्याविषयको रागः । अथवा, दाराणां रागः दाररागः स्वस्मिन् दाररागः स्वदाररागः, परस्परानुराग इति तदर्थः । सचधर्मश्च पूर्वोक्त संविभागरूपो धर्मः पितृदेवार्चनादिश्च, तस्यापि दारानुकूलाभावे, असंभवात् , तद्वान्-अनुकूलदारसाचिव्यसम्भूत संविभागधर्मसहित गृहाश्रमो यदि भवेत् । अयं, गृहाश्रमः । फलेग्रही, अवंध्यः । अनिष्फलो भवेत् । यद्यपि फलेग्रही शिवदः फलवद्वृक्ष प्रसिद्धः फलवत्वगुणनान्यत्रापि प्रयुज्यते । महागुणः श्लाघनीयगुणवांश्च । समेधते, वर्धत इति भावः । श्लोकत्रयेण धर्मानुष्ठानप्रकार उक्तः ॥ ॥५॥

**अतिप्रशस्तधर्मवान् गृहाश्रमः फली यदा ।**
**तदाऽस्य किं फलं भवेत्तदुत्तराश्रमाश्रयात् ॥६॥**

अतिप्रशस्तः सर्वोपकारक्षमत्वात् अत्यन्तं प्रशस्ताः श्लाघ्याः येधर्माः संविभागादयः तद्वान् । गृहाश्रमः, यदा, यस्मिन्काले, फली फलवान्-प्रशंसायां मतुप् भवति, विविदिषादिद्वारा ज्ञानफलपर्यवसायि भवति। तदा। अस्य, गृहिणः । तदुत्तराश्रमाश्रयात्-तस्मात् गृहाश्रमात् उत्तरौ ऊर्ध्वकालिकौ यावाश्रमौ वानप्रस्थसन्यासाश्रमौ तयोराश्रयात् । किंफलं स्वाश्रमलभ्यं भवेत्? नकिञ्चिदित्यर्थः । ज्ञानस्यैव सर्वाश्रमानुष्ठानलभ्यत्वादिति भावः ॥ ॥६॥

**स्वधर्मनिष्ठया युतो गृहाश्रमी शिरोमणिः ।**
**सुदुर्ग्रहेन्द्रियाशयप्रसाध्यधर्मशालिनाम् ॥७॥**

स्वधर्मनिष्ठया, स्वाश्रमविहितपत्नीसाचिव्यादिसाधन संपन्नसंविभाग श्रौतस्मार्तकर्मादिनिष्ठया। युतः, युक्तः, गृहाश्रमी, सुदुर्ग्रहेन्द्रियाशयप्रसाध्यधर्मशालिनां,सुतरां दुःखेन ग्रहीतुं विषयाप्रवेशेन स्वायत्तीकर्तुं योग्यानि इन्द्रियाणि येन तादृश आशयो मनः तत्प्रसाध्याध्यानधारणादयोधर्माः तादृशधर्मशालिनां मुनीनां । शिरोमणिः उत्कृष्टो भवतीत्यर्थः॥ ॥७॥

**गृहीतराश्रमस्थितान् स्वधर्मनिष्ठया युतान् ।**
**विधाय धर्ममात्मनश्च साधयन् तदुत्तमः ॥८॥**

गृही, इतराश्रमस्थितान्, गृहाश्रमापेक्षया इतरे भिन्ना य आश्रमाः, ब्रह्मचर्यवानप्रस्थसन्यासाः, तेषु स्थितान् । स्वधर्मनिष्ठया, स्वस्वाश्रम-विहितधर्माः वेदाध्ययनतपश्श्रवणादयः, तेषु निष्ठा निरन्तरं तदनुष्ठानं तया युक्तान् । विधाय, भिक्षादानादिना धर्मानुष्ठानप्रतिबन्धकबुभुक्षा-निवृत्यादिसम्पादनेन कृत्वेत्यर्थः । आत्मनोधर्मं, स्वाश्रमविहितधर्मं नित्यनैमित्तिकादिकं च । साधयन्, तदुत्तमः, तेषां स्वस्वाश्रमविहित धर्ममात्रपरिपालनं, अस्यतु सर्वाश्रमविहितधर्मपालनमिति सर्वापेक्षया उत्तम इत्यर्थः ॥ ॥८॥

**गृहाश्रमस्थितिर्वरा समस्तशास्त्रचोदनात् ।**
**अनिन्दिताः परे यदा तदा भवेयुरीदृशाः ॥९॥**

गृहाश्रमस्थितिः, गृहस्थाश्रमधर्मनिष्ठा । समस्तशास्त्रचोदनात् , समस्तैः शास्त्रैः श्रुतिस्मृतिपुराणेतिहासैः विधानात् । वरा, उत्कृष्टा । 'ऐकाश्रम्यमेके ब्रुवते, प्रत्यक्षविधानात् गार्हस्थ्यस्य' इति गौतमसूत्रात् । परे,

तद्भिन्ना ऊर्ध्वरेतसामाश्रमाः । अनिन्दिता यदा भवेयुः, तदा ईदृशाः, गृहाश्रमतुल्या भवेयुः । अयं भावः ॥

भगवताऽऽपस्तम्बेन 'त्रैविद्यवृद्धानांतु वेदाः प्रमाणमिति । तत्र यानि श्रूयन्ते व्रीहियवपश्वाज्यपयःकपालपत्नीसंबन्धान्युच्चैर्नीचैःकार्यमिति तै विरुद्धाचारोऽप्रमाणमिति मन्यन्ते'इत्यादिना दर्शपूर्णमासादिकर्मानुष्ठान-रहितोर्ध्वरेतसामाचारो वेदविरुद्धत्वादनाचार इति त्रैविद्यवृद्धसम्मतत्वेन मतप्रदर्शनं कृतम् । एवं भारते शान्तिपर्वणि भूयसी संन्यासनिन्दा दृश्यते एवं निन्दाप्रशंसाभ्यां गार्हस्थ्यस्य उत्कर्षसिद्धिरिति, अनिन्दिता यदा भवेयुरित्यस्यायं भावः । आपस्तम्बादिनिन्दायाः 'न हि निन्दा निन्द्यं निन्दितुं प्रवृत्ता अपितु स्तुत्यं स्तोतुं प्रवृत्ता'इति न्यायेन संन्यासनिन्दा-यां तात्पर्यं नास्ति, किन्तु गार्हस्थ्यस्य प्रशंसायां । तस्मात्संन्यासादीना मपि निन्दा नास्ति । यद्वा, ऊर्ध्वरेतसामाश्रमाणां निन्दा, 'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते नरः । प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा'इत्यादिना तदाचारभ्रंशः उपरिष्टाद्वक्ष्यते । तादृशभ्रंशरहित-तया तदाश्रमनिष्ठा यदा सिध्यति तदा गृहस्थाश्रमतुल्या भवेयुरिति ॥९॥

**यथोक्तधर्मपालनात् क्षितौ गृहे वसन्नपि ।**
**द्युलोकवासिमध्यगो भवन्नयं विभाव्यते ॥१०॥**

गृहाश्रमस्थितो, क्षितौ वसन्नपि । यथोक्तधर्मपालनात उक्तमनति क्रमन्तो ये धर्मास्तेषां पालनात्, अवैकल्येनानुष्ठानात् । द्युलोक-वासिमध्यगः, द्युलोकवासिनां मध्यगो भवन् लोकैर्विभाव्यते, धर्मानुष्ठा नफलावश्यंभावनियमादित्यर्थः॥ अनेन श्लोकेन गृहाश्रमानुष्ठानात् आमु-ष्मिकफलप्राप्तिरुक्ता ॥१०॥ इति पञ्चमं कुसुमम् ॥

## 6. வாழ்க்கைத்துணை நலம் गृहिणीगुणः ॥

**गृहार्हशीलसद्गुणा धनागमोचितव्यया ।**
**सुदक्षिणा सधर्मिणी प्रियाऽऽश्रमस्य साधिका ॥१॥**

अथ गृहस्थाश्रमस्य भार्यानुकूल्यसाध्यत्वात् तदर्थं षष्ठं कुसुमम् ॥

गृहार्हशीलसद्गुणा, गृहाश्रमस्यार्हौ, उचितौ, शीलसद्गुणौ, शीलं आचारः वृत्तं, इत्येकार्थकं, सद्गुणः, भक्तिदयादिः, तौ यस्यास्सा तथोक्ता। महत्सु, उत्तमाश्रमनिष्ठेषु भक्तिः, दीनेषु दया इत्येवमादयः सद्गुणाः, तदुचितसपर्यासमर्पणमाचारः, एवमादिगुणशीलवती । धनागमस्य भर्तृकृतधनार्जनस्य उचितो युक्तो व्ययः, धनस्य विनियोगः पायसापूपादिषु यस्यास्सा तथोक्ता सुदक्षिणा, पाकशुश्रूषादिषु शोभनसामर्थ्यवती च या सधर्मिणी धर्मानुष्ठानसाहित्यशीला पत्नी । प्रिया, आश्रमधर्मसम्पादनस्य साधिका हेतुर्भवति । तादृशभार्यासाधनेनैव भर्तुर्गृहाश्रमः सिध्यतीत्यर्थः॥ ॥१॥

**न यस्य शीलसद्गुणैस्सधर्मिणी समेधते ।**
**विशालसंपदा युतो गृहाश्रमो भवेद्वृथा ॥२॥**

यस्य गृहस्थस्य सधर्मिणी शीलसद्गुणैः, शीलेन, रमणीयाचारेण सद्गुणैः, सत्यार्जवभक्तिदयादिभिः । न समेधते, न वर्धते । शीलगुणवर्धनमत्र भार्यावर्धनं न तु यथेष्टाहारप्रयुक्तमांसळादिकमित्यर्थः । तस्य अननुकूलभार्यावतः । गृहाश्रमः, विशालसंपदा, महाभाग्येन । युतोऽपि, वृथाभवेत्, । निष्फलो भवेदित्यर्थः ॥ ॥२॥

**कळत्रशीलसद्गुणैः सुदुर्लभं गृहेऽस्ति किम् ।**
**विनापि शीलसद्गुणान् किमस्ति दुर्लभेतरत् ॥३॥**

गृहे, गृहस्थाश्रमे । कळत्रशीलसद्गुणैः, कळत्रस्य, पत्न्याः शील-

सद्गुणैः । सुदुर्लभं, सुतरां दुर्लभं । किमस्ति ? । न किञ्चिदित्यर्थः । भार्याशीलगुणमहिम्ना सर्वमपि सुलभमित्यर्थः । शीलसद्गुणान्, भार्याया इत्यर्थः विनापि तद्योगे तृतीया, गुणाभाव इत्यर्थः । गृहदुर्लभेतरत्, सुलभं किमस्ति ? । दुर्लभमेवेत्यर्थः॥ श्लोकद्वयेन गृहस्थाश्रमापेक्षितं भार्यायाः शीलगुणवत्त्वमेव, नत्वन्यदित्युक्तम्॥ ॥३॥

**गृहाश्रमे महाधनं किमस्ति भार्यया विना ।**
**अलङ्करोति चेदिमां पतिव्रताढदृढव्रतम् ॥४॥**

पतिव्रतानां पातिव्रत्यशीलानां दृढव्रतं निश्चलनियमः । इमां, पत्नीं, अलङ्करोतिचेत् । तादृशभार्याव्यतिरिक्तं, गृहाश्रमे गृहिणा संपाद्यं धनं किमस्ति ? । पातिव्रत्यशीला भार्यैव गृहस्थस्य सर्वस्वमित्यर्थः॥ ॥४॥

**विनान्यदेवताश्रयं स्वतल्पतः समुत्थिता ।**
**स्वदेवभर्तृपूजिनी निजेच्छयैव वर्षयेत् ॥५॥**

स्वतल्पतः समुत्थिता, तल्प समुत्थान प्रभृतीत्यर्थः । अन्यदेवताश्रयं, देवतान्तरभजनं विना । स्वदेवभर्तृपूजनशीला पत्नी निजेच्छयैव स्वेच्छयैव। वर्षयेत्, पर्जन्यमितिशेषः । एतादृशगुणशीलवती पतिव्रता वर्षणे पर्जन्य मपि प्रेरयेच्चेत्, स पर्जन्यः अवश्यं वर्षेदित्यर्थः॥ ॥५॥

**स्वरक्षिणीं निजव्रतैः स्वभर्तृपूजनोत्सुकाम् ।**
**द्वयोर्यशःप्रसाधिनीं गृहे स्त्रियं प्रचक्षते ॥६॥**

निजव्रतैः पतिव्रताधर्मैः । स्वरक्षिणीं आत्मरक्षणशीलाम् स्वभर्तुः पूजने औत्सुक्यवतीं । द्वयोः आत्मनः पत्युश्च यशःप्रसाधिनीं यशः प्रसाधनशीलां, गृहे गृहाश्रमे स्त्रियं प्रचक्षते । विरुद्धास्तु धर्मप्रातिकूल्यात् । स्त्रिय एव न भवन्तीत्यर्थः ॥ ॥६॥

**पतिप्रयत्नसाधितं न चावरोधवर्तनम्।**
**दृढव्रतं मनः स्वयं पिपर्ति सर्वदा सतीम् ॥७॥**

पतिप्रयत्नसाधितं, पत्युःप्रकृष्टयत्नेन साधितं, अवरोधवर्तनं, चकारो ऽनुक्तसमुच्चयार्थः । तर्जनताडनादिकञ्च । स्त्रियं न पिपर्ति। 'पृ-पालन पूरणयोः' जुहोत्यादिः, न रक्षति, किन्तु । दृढव्रतं मनः पाति-व्रत्यदार्ढ्य सहितं मन एव स्वयं सती सर्वदा पिपर्ति, अवरोधाद्यभावेऽपि रक्षतीत्यर्थः ॥ ॥७॥

**क्षितौ गृहे स्त्रियः पतिं प्रपूज्य सम्यगादरात् ।**
**अमर्त्यलोकवासिनां समर्हणं भजन्ति हि ॥८॥**

स्थितौ, भुवि । स्त्रियः, गृहे, गृहस्थाश्रमे, विद्यमानं पतिं । सम्यक् यथाविधि प्रपूज्य । अमर्त्यलोकवासिनां देवानां । समर्हणं, समीचीन पूजां भजन्ति । हिः प्रसिद्धौ आदरातिरेकतः पूजनात् सर्वदेवपूज्यतां लभन्त इत्यर्थः ॥ ॥८॥

**सुपुण्यकीर्तिमण्डिता न यद्गृहे सधर्मिणी ।**
**स सिंहवत् द्विषां पुरः कथं सलीलमञ्चति ॥९॥**

सुपुण्यकीर्तिमण्डिता, स्त्रीणां शोभनं पुण्यं पातिव्रत्यमेव तेन सञ्जातया कीर्त्या मण्डिता अलंकृता, नतु रूपयौवनादिकीर्त्या, नापि कटकहार-केयूरादिभिः मण्डिता, एवंविधा सधर्मिणी, धर्मानुष्ठानसाहित्यशालिनी। यद्गृहे, यस्यपुरुषस्य गृहाश्रमे न विद्यते। स पुरुषः । द्विषां निन्दकानां पुरःसिंहवत् सलीलं कथमञ्चति? गन्तुमपि जिहेतीत्यर्थः । पाति-व्रत्यकीर्तिमत्पत्नीवत एव सिंहस्येव गमनं युज्यत इति भावः ॥ ॥९॥

**कुलाङ्गनागुणा नृणां सुमङ्गला गृहाश्रमे ।**
**महार्घपुत्रसंभवः प्रसाधयेदिमानपि ॥१०॥**

गृहाश्रमे विद्यमानानां नृणां कुलाङ्गनागुणाः शीलभक्तिदयादयः, सुमङ्गलाः शोभनैहिकामुष्मिकफलजनका भवन्तीत्यर्थः । महार्घपुत्रसंभवः, महागुणपुत्रप्रसवः इमान् पत्नीगुणानपि प्रसाधयेत् अलङ्कुर्यादित्यर्थः । बहवोऽपि पत्नीशीलगुणादयः सुपुत्रानुत्पत्तौ न शोभन्त इत्यर्थः ॥१०॥

इति षष्ठं कुसुमम् ॥

## 7. புதல்வரைப் பெறுதல் पुत्रलाभः ॥

**विवेकिपुत्रसंपदा धनादि संपदन्तरम् ।**
**न मन्महे समं वयं गृहाश्रमव्यवस्थितौ ॥१॥**

पूर्वस्मिन्कुसुमे पत्नीगुणालङ्कारः सत्पुत्रलाभ इत्युक्तं । तत्प्रसङ्गेन पुत्रलाभप्रसंगार्थं कुसुमान्तरं प्रस्तूयते । पितृऋणापाकरणस्य पुत्रलाभाभावे अभावात्, स एव गृहाश्रमिणः सम्पाद्येषु प्राथमिक इत्याह । विवेकीति । गृहाश्रमव्यवस्थितौ, गृहस्थाश्रमव्यवस्थायां, इदं मुख्यमिदममुख्यमिति तदाश्रमसंपाद्यपदार्थव्यवस्थायां । विवेकिनः, पुत्रस्य संपदा संपादनेन, धनादिसंपदन्तरं पुत्रसंपादनापेक्षया भिन्नं, धनादिसंपादनं । यद्वा पुत्रसंपदा पुत्रभाग्येन सम्पदन्तरं समं तुल्यमिति वयं न मन्महे । धनादिसंपादनाभावे प्रत्यवायाश्रवणात् । पुत्राभावे 'नापुत्रस्यहिलोकोऽस्ति' इति प्रत्यवायश्रवणाच्चेति भावः ॥ ॥१॥

**पैररनिन्दितं सुतं प्रपद्यते नरो यदि ।**
**व्यथा न सप्तजन्ममु स्पृशन्ति पापजा इमम् ॥२॥**

परैः शत्रुभिरप्यनिन्दितं सद्गुणशालित्वादित्यर्थः । सुतं, नरः गृहाश्रमी प्रपद्यते यदि प्राप्नोति यदि, सप्तजन्मसु, देवमनुष्यमृगपक्षिसंसर्पणजलजन्तुस्थावररूप सप्तजन्मसु । पापजाः पापसंभवाः व्यथाः । इमं पुत्रिणं । न स्पृशन्ति, न सम्बध्नन्ति ॥ ॥२॥

यद्वा --

अनिन्दितात्मसंभवप्रसूतिरासप्तमात् ।
अपारदुःखसन्ततेः समुद्धरेत् कुले पितॄन् ॥

अनिन्दितस्य गुणभूम्ना परकृतनिन्दाया अविषयस्य आत्मसम्भवस्य औरसस्य प्रसूतिरुत्पत्तिः, आसप्तमात्, पितरमारभ्य सप्तपुरुषपर्यन्तमित्यर्थः, कुलसंभूतान् पितॄन्, अपारदुःखसन्ततेः, निरवधिकदुःखसमुद्रात समुद्धरेदिति वा ॥

पितुः सुतः स्वमुच्यते स्वसाधितं तदार्जितम् ।
द्वयं निजेन कर्मणा पितुः सुतः प्रयच्छति ॥३॥

सुतः, पुत्रः पितुः स्वधनमित्युच्यते सद्भिः । तथाहि । यतः स्वसाधितं, स्वसंपादितं, तदार्जितं, पित्रार्जितञ्च, निजेन करणीयेन कर्मणा श्राद्धदानादिना, पितुः प्रयच्छति, समर्पयति, सम्बन्धसामान्यविवक्षायां षष्ठी । तस्माद्गुणशाली पुत्र एव पितुः स्वजन्यफलप्राप्तिहेतुत्वात्स्वमित्युपचर्यते ॥ ॥३॥

स्वसत्कुमारपाणिना यदन्नकं समर्पितम् ।
इदं पितुस्सुधाधिकं भवेदिति प्रचक्षते ॥४॥

स्वस्य यःसत्कुमारः तस्य पाणिना यदन्नकं कुत्सितमन्नं इङ्गुदीपिण्याकादिकं समर्पितं । इदं, सुतसमर्पितं रुचिहीनमप्यन्नं । पितुः सुधा-

धिकं अमृताधिकञ्च । भवेत् इति महान्तः प्रचक्षते । प्रकर्षेण वदन्ति। श्रीरामसमर्पितं इङ्गुदीपिण्याकं दशरथस्यामृतमासीदिति रामायणादि प्रसिद्धेः ॥ ॥४॥

**कुमारकाङ्गसङ्गमः पितुस्तनोः सुखावहः ।**
**तदीयवाक्यधोरणी श्रुतेः सुखाय कल्पते ॥५॥**

अल्पःकुमारः कुमारकः अतिबालस्य पुत्रस्याङ्गसङ्गमः शरीरसंस्पर्शः, पितुः, जनकस्य । तनोः, शरीरस्य । सुखावहः, सुखमानन्दमावहतीति तथा । यद्यपि सुखमात्मनि जायते तथापि शरीरपदवाच्यत्वगिन्द्रियग्राह्य-शीतलस्पर्शजन्यत्वात् शरीरस्य सुखमित्युपचर्यते । तदीयवाक्यधोरणी, कुमारोदितवाक्यपरिपाटी, श्रुतेः श्रवणेन्द्रियस्य सुखाय कल्पते, श्रवणे-न्द्रियग्राह्यपदजन्यत्वात पूर्ववदुपचारात , इन्द्रियसौख्यं जनयतीत्यर्थः ॥॥

**अपूर्णवर्णमीरितं सुताननाब्जनिस्सृतम् ।**
**अशृण्वता प्रशस्यते विपञ्चिकादिकूजितम् ॥६॥**

सुतस्याननमेवाब्जं तस्मात् मकरन्दवन्निस्सृतं अपूर्णवर्णं अव्यक्ता-क्षरं ईरितं वचनं अशृण्वता, दैवविपर्ययात्तादृशपुत्रालाभेन तदीय-मल्लापकोमळिमानमप्रत्यक्षीकुर्वता मनुष्यहतकेन । विपञ्चिकादिकूजितं, वीणावेणुमृदङ्गादिध्वनितं, प्रशस्यते, श्रवणेन्द्रियसौख्यदायकमित्युच्यते। दैववशसम्पन्नकुमाराव्यक्तवचनमञ्जानसुखप्रत्यक्षवता तु न प्रशस्यते इत्या-कूतम् ॥ ॥६॥

**पिता सुतं सभाजुषां पुरस्सरं सुविद्यया ।**
**यदातनोति तद्बुधाः सुतोपकारमूचिरे ॥७॥**

पिता, जनकः । सुतं, सुविद्यया, प्रशस्तशास्त्रादिविद्यया । सभाजुषां, विदुषां । पुरस्सरं, अग्रेसरं । आतनोतीति यत् तत्, विद्वदग्रे सरत्वसंपादनं । बुधाः, पण्डिताः । सुतोपकारं, पितृकर्तव्यं पुत्रस्योपकारं साधनसम्पादनमूचिरे, शास्त्रेष्विति शेषः ॥ ॥७॥

**स्वपुत्रशास्त्रवेदनप्रशस्ततात्मनोऽपि या ।**
**महामहीजुषामियं पितुश्च तोपकारणम् ॥८॥**

आत्मनोऽपि, आत्मापेक्षयापि । स्वपुत्रशास्त्रवेदनप्रशस्तता, स्वपुत्रस्य शास्त्रवेदने प्रशस्तता, उत्कृष्टता या भवति । सा महामहीजुषां, विशाल भूमण्डलगतानां मनुष्याणां पितुश्च तोपकारणं सन्तोषजनकं भवतीतिशेषः।

**समस्तशास्त्रवल्लभः सुतस्तवेति सन्मुखात् ।**
**निशम्य पुत्रलाभतः परं प्रसूः सुखं भजेत् ॥९॥**

प्रसूः, माता । सन्मुखात्, सतां, शास्त्रवेदिनां मुखात् तव सुतः समस्तशास्त्रवल्लभः, सर्वशास्त्रविशारद इति वच इत्यर्थः । निशम्य, श्रुत्वा । पुत्रलाभतः पुत्रलाभप्रयुक्तसुखापेक्षया परं अधिकं सुखं, भजेत्, प्राप्नुयादित्यर्थः ॥ ॥९॥

**उपक्रिया पितुः सुतात्तदीयशीलवेदिभिः ।**
**पिताऽस्य कीदृशं तपो व्यधादिति प्रशंसनम् ॥१०॥**

पितुः जनकस्य सुतात् पुत्रात्, उपक्रिया, उपकारः । तदीयशीलवेदिभिः पुत्रसंबन्धिसदाचारज्ञातृभिः । अस्य पुत्रस्य लाभाय पिता कीदृशं तपो व्यधात्, अकरोत्, इति प्रशंसनं । सदाचारनिष्ठया पुत्रनिष्ठया, एतादृशपुत्रलाभाय पिता कीदृशं तपश्चकारेति प्रशंसनमेव पितुः पुत्रहेतुरुपक्रिया भवतीत्यर्थः ॥ ॥१०॥

इति सप्तमं कुसुमम् ॥

## ४. அன்புடைமை दयाप्रशंसा ॥

**दयान्तराप्रगोपने कपाटिका न काचन ।**
**यदश्रुशीकरोदयो निरर्गळः प्रकाशकः ॥१॥**

भार्यापुत्रादिममताविषयेषु दयायाः सम्भवात् तदधिकारानन्तरं दया प्रशंसां प्रस्तौति । परकीयदयायाः प्रत्यक्षागोचरतया तदस्तित्वे किं मानमित्याशङ्क्य प्रत्यक्षाभावेऽपि अनुमानं तत्प्रमाणमित्याह । दयेत्यादिना । दयाया अन्तरा अन्तःकरणे प्रगोपने प्रकर्षेण गोपने, इतरबुद्ध्य विषयत्वापादने कपाटिका, गोपनसामग्री काचन, काचिदपि नास्तीत्यर्थः। यत्, अश्रुशीकरोदयः दयनीयदुःखदर्शनजनित तन्निराचिकीर्षारूप-दयोदयक्षण एव जायमानः । निरर्गळः, प्रतिबन्धरहितः । बाष्पप्रवाहः, प्रकाशकः, । अनुमापकः भवतीति शेषः ॥ ॥१॥

**दयाविहीनसंपदः स्वमात्रकार्यसाधिकाः ।**
**दयावदङ्गमप्यहो परोपकारकल्पकम् ॥२॥**

दयाविहीनसम्पदः, दयया विहीना ये तेषां सम्पदः, भाग्यपरंपराः, स्वमात्रकार्यस्य स्वएव स्वमात्रं तस्य यत्कार्यं, उदरपोषणादिकं, तस्य साधिकाः, उपकारिकाः, मात्रपदेन परेषां व्यावृत्तिः । दयावदङ्गमपि दयावतां जीमूतवाहनादीनां अङ्गमपि किमुत संपद इत्यर्थः । परोपकारकल्पकं, परेषामुपकारः, अनिष्टनिवृत्तिः, तस्य कल्पकमित्यर्थः । अहो आश्चर्यं, दयावन्तः परमप्रेमविषयशरीरेणापि परेषामुपकुर्वन्तीति तादृश पुरुषदौर्लभ्यद्योतनाय, अहोशब्दप्रयोगः ॥ ॥२॥

**सुदुर्लभाङ्गसङ्गमो दयाफलाय देहिनः ।**
**यदङ्गसङ्गमं विना न जीव आतनोति ताम् ॥३॥**

देहिनः, जीवस्य । सुदुर्लभाङ्गसङ्गमः, सुतरां दुर्लभं सुकृतफलत्वात् तादृशोऽङ्गसङ्गमः, देहसम्बंधप्राप्तिः दयारूपाय जन्मफलाय । यत्, यस्मात् । तां, दयां । अङ्गसङ्गमं विना जीवः नातनोति । तस्मात् दुर्लभमनुष्यदेहवताऽवश्यं दया कार्या अन्यथा निष्फलं जन्म भवतीत्यर्थः ॥३॥

**स्वबन्धुतानिबन्धनं दया हि सर्वदेहिषु ।**
**खपुष्पविद्विषःपरं यशोधनं वशे स्थितम् ॥४॥**

सर्वदेहिषु, समस्तभूतवर्गेषु दया, तत्तदनिष्टपरिजिहीर्षारूपस्नेहातिशयः । हि, यस्मात् स्वबन्धुतानिबन्धनम् । प्रसिद्धं हि लोके आत्मसम्बन्धिषु पुत्रकलत्रादिषु तत्तदनिष्टपरिहारेच्छा तादृशस्वभावतः, बन्धुतानिबन्धनमुपाधिर्भवति । निबध्यतेऽनेनेति निबन्धनं, बन्धुतास्थिरीकरणकारणमित्यर्थः । एवंविधस्य विद्वेषिणः अप्रसिद्ध्या, खपुष्पविद्विषः, गगनकुसुमायमानशत्रुवर्गस्य अपयशःप्रसक्त्यभावेन परं उत्कृष्टं यशः यश एवधनं भाग्यं वशे स्थितं स्वाधीनं भवतीत्यर्थः ॥ ॥४॥

**सहैहिकैः सुखैर्गृहे स्थितिर्दयापरिष्कृता ।**
**अनश्वरं महासुखं फलत्यमर्त्यविष्टपे ॥५॥**

ऐहिकैरिहलोके भवैः सुखैः भार्यापुत्रधनुभवजन्यैः वैषयिकानन्दैः सह । दयापरिष्कृता, परदुःखप्रहाणेच्छालंकृता गृहे स्थितिः, गृहस्थधर्मपालनं । अमर्त्यविष्टपे, स्वर्गलोके । अनश्वरं, चिरकालावस्थायि महासुखं वैषयिकसुखेभ्युत्कृष्टं सुखं । फलति, निष्पादयतीत्यर्थः । फलनिष्पत्ताविति

धातुः सकर्मकः। 'वाल्मीकिः फलति स्म यस्य चरितस्तोत्राय दिव्या गिरः' इति मुरारिः ॥ ॥५॥

**दयां वदन्त्यमेधसः सुकर्ममात्रसाधनम्।**
**प्रकोपमुज्झितं रिपौ दयैव यन्नियच्छति ॥६॥**

अमेधसः न विद्यते मेधा येषां ते अमेधसः अकृतबुद्धय इत्यर्थः। दयां सुकर्ममात्रसाधनं सुकर्मणःसुकृतस्यैव साधनं हेतुः नान्यथापीति वदन्ति। तद्युक्तमित्यर्थः । यस्मात् रिपौ उदितेन रिपुकृतेनासाधुकर्मणा सञ्जातं प्रकोपं मनस्संक्षोभ तच्छापदानाद्यनिष्टप्रवर्तकं । दयैव, तस्मिन्नित्यर्थः । नियच्छति, निवारयति । एवकारो हेत्वन्तरनिवर्तकः । महान्तोहि विद्विषिप्रयुक्तदुष्कृत्यसञ्जातमनस्संक्षोभवन्तोऽपि, अस्मत्कृतशापादिजनितदुःखभाजो माभूवन्निति दययैव कोपं नियच्छन्तीत्यर्थः । तस्मात् कोपजनत्प्रसक्तस्वकीयाधर्मनिवर्तकत्वमस्तीति भावः ॥ ॥६॥

**निदाघदीधितिर्यथा दहत्यनस्थिदेहकम् ।**
**तथैव धर्मशासनो दयाविहीनमानसम् ॥७॥**

निदाघदीधितिः सूर्यः, अनस्थिदेहकं न विद्यन्तेऽस्थीनि यस्य देहस्य तद्वन्तं क्रिमिकीटमत्कुणादिकं दहति भस्मीकरोति । तथैव धर्मशासनः, धर्मफलदाता । दयाविहीनमानसं, दयया वियुक्तं मानसं मनो यस्य स तथाभूतं, निर्दयं । निर्दहतीत्यनुषज्यते ॥ ॥७॥

**दयासुदूरचेतसो गृहस्थतावलम्बनम् ।**
**मरुस्थशुष्कपादपप्रवाळपङ्क्तिसोदरम् ॥८॥**

दयासुदूरचेतसः, दयायाः सुदूरं दूरस्थितं तत्सम्बन्धहीनं चेतः यस्य

तस्य । यत् गृहस्थतावलम्बनं, गृहाश्रमस्थता, भार्योद्वहनादिकं । मरुभूमिस्थशुष्कपादपस्य या प्रवाळपङ्क्तिः तस्याः सोदरं तुल्यम् ॥८॥

**गृहाश्रमेऽन्तरङ्गमङ्गमाशये नचेद्दया ।**
**स किं फलं प्रसाधयेत्परागकैर्बहिर्गतैः ॥९॥**

यस्य आशये मनसि । गृहाश्रमे, गृहस्थाश्रमधर्मानुष्ठाने । अन्तरङ्गं मुख्यमङ्गं उपकारकं । दया, यस्यकस्यपुरुषस्याशये । नचेत् नविद्यते यदि । स पुरुषः । बहिर्गतैः, धनदशकालादिभिः । पराङ्गकैः, इतरसाधनैः । किंफलं प्रसाधयेत् न किञ्चिदित्यर्थः । यथा बाह्यान्तरगतेषु अवयवेषु अन्तर्गतास्थिनाड्यादिवैकल्ये बहिर्गतकरचरणादिभिरवयवान्तरैः ग्रहणगमनादिकार्यसमर्थो न भवति तथेत्यप्यर्थः प्रतीयते ॥ ॥९॥

**दयावतां कळेबरं वदन्ति जीवमण्डितम् ।**
**परस्य चर्मनद्धमस्थिपञ्जरं प्रचक्षते ॥१०॥**

दयावतां, गृहाश्रमधर्मानुष्ठानप्रशस्ताङ्गदयाशालिनां कळेबरं देहमेव । जीवमण्डितं, जीवेन प्राणधारणेन मण्डितं परिष्कृतम् । वदन्ति । दयाशालिनामेव देहधारणसाफल्यात । तादृशदयारहितस्य परस्यतु कळेबरं, चर्मनद्धं त्वक्परिणद्धं । अस्थिपञ्जरं, प्रेतदेहं, सतोपि जीवस्य निष्फलत्वेन गतप्रायत्वादित्यर्थः । प्रचक्षते, सम्यग्वदन्तीत्यर्थः ॥१०॥

इत्यष्टमं कुसुमम् ॥

---

## ९. விருந்தோம்பல் अतिथिसमर्चनम् ॥

**अगच्छता वन गृहास्थतानिजार्जितधनैः ।**
**प्रपूजनप्रयोजनं विनातिथेर्नकिञ्चन ॥१॥**

अथातिथ्यमुच्यते । यद्यपि गृहस्थस्य देवापितृबन्धुस्वातिथीनां पञ्चानामपि समर्चनं कर्तव्यमिति पूर्वमुक्तम् । तथापि देवपितृणामप्रत्यक्षत्वात् बन्धूनामात्मनश्च समर्चनस्य स्वभावसिद्धतयावक्तव्यत्वादतिथीनामेव समर्चनं गृहाश्रमिणा प्रधानतः कर्तव्यं, तच्च दयाहेतुकमिति तन्निरूपणानन्तरं तदारम्भः ॥

वनं, अगच्छतः, उत्तराश्रमप्रवेशनं विना गृहएव तिष्ठतः गृहस्थस्य सम्बन्धिन्या गृहस्थितेः, गृहाश्रमनिष्ठतायाः । अतिथेः प्रपूजनप्रयोजनं, अतिथिपूजारूपप्रयोजनं विनाऽन्यत् प्रयोजनान्तरं न किञ्चन । अतिथिसत्कारएवाभ्यर्हितं प्रयोजनमिति प्रशंसा ॥ ॥१॥

**विनाऽतिथेः प्रपूजनं गृहाश्रमावलम्बिना ।**
**स्वयं यदश्यतेऽमृतं न तत्प्रशस्यते बुधैः ॥२॥**

अतिथेः, अभ्यागतस्याप्युपलक्षणम् । भोजनार्थं गृहमागतस्यातिथेः अभ्यागतस्यापि । प्रपूजनं, प्रकृष्टमुत्कृष्टं स्वापेक्षया पूजनं भोजनादिप्रदानेन प्रीणनं तत् विना, गृहाश्रमनिष्ठेन स्वयं यदमृतमश्यते । तत्, अश्यमानममृतमपि बुधैः न प्रशस्यते । किन्तु तद्विषमेवेति निन्द्यत इति भावः । 'सम्पन्नमश्नन्विषमत्ति मोहा' दिति पूर्वोदाहृतानर्गितादि प्रमाणमत्र द्रष्टव्यम् । द्वाभ्यामातिथ्यमहत्वमुक्तम् ॥ ॥२॥

**गृहागतार्चनोच्चयैर्दिनेदिने गृहस्थता ।**
**दरिद्रभावहेतुना न हन्यते कदाचन ॥३॥**

गृहागतानां भोजनार्थं स्वगृहं प्राप्तानां अतिथीनां अभ्यागतानां च अर्चनानामुच्चयैः समुच्चयैः दिनेदिने, वीप्सायां द्विर्भावः, प्रतिदिनसमेधमानातिथिपूजाभिरुपलक्षिता । गृहस्थता, गृहाश्रमधर्मपरिपालनं ।

कदाचन, स्वप्नेऽपि । दरिद्रभावहेतुना, दारिद्र्यरूपकारणेन । न हन्यते नविहन्यते । तादृशस्य कदापि दारिद्र्यं तत्कृताश्रमधर्महानिश्च न भवतीत्यर्थः ॥ ॥३॥

मुखाम्बुजं विकासयन्प्रपूजयेच्च योऽतिथीन् ।
गृहेऽस्य नित्यमेधते प्रकाश्य मानसं रमा ॥४॥

यो गृहाश्रमी आगतानतिथीन् मुखाम्बुजं विकासयन् । अन्तस्सन्तोषेण विकसितं कुर्वन् । पूजयेत् । सम्भावनायां लिङ् । चकारः मुखविकासपूजयोःसमुच्चयार्थः । रमा, लक्ष्मीः । अस्य, गृहस्थस्य । गृहे, सद्मनि । मानसं, मनः । प्रकाश्य । स्वमनोगतं सन्तोषातिशयं प्रकाशयतीत्यर्थः । सत्पात्रविनियोगेन लक्ष्मीमनस्सन्तोष इति भावः । पूर्वश्लोके व्ययातिशयेन दारिद्र्यसम्भवात् आश्रमधर्महानिमाशङ्क्यात्मनस्सा न भवतीत्युक्तम् । तदुपपादनमनेन कृतमिति ध्येयम् ॥ ॥४॥

समागतातिथीन्पुरा प्रभोज्य शिष्टमश्नतः ।
न बीजवापसंस्क्रियामपेक्षते वसुंधरा ॥५॥

पुरा स्वभोजनात्पूर्वं । समागतानतिथीन् । प्रभोज्य । भोजयित्वा शिष्टम् अवशिष्टम् । अश्नतः गृहस्थस्य । वसुंधरा । सस्योत्पादिनीति शेषः। बीजानां वापादिसंस्क्रियाम् । कर्षणादिरूपाम् वा नापेक्षते अकृष्टपच्या मही स्वयमेव सस्यवृद्धिं प्रयच्छतीति भावः ॥ ॥५॥

प्रपूजयन्पुरागतान् समागमिष्यतोऽतिथीन् ।
प्रतीक्षते हि यो गृही स नाकिभिः प्रतीक्ष्यते ॥६॥

यो गृही । प्रशस्तगृहाश्रमवान् । यःपुमान् । पुरागतान् । पूर्वमागतान् । अविलम्बेन प्रपूजयन् । प्रकर्षेणपूजयन् । समागमिष्यतः । अतिथीन्

प्रतीक्षते । तदागमनमाकांक्षमाणो वर्तते स गृहाश्रमनिष्ठः । नाकिभिः देवैः । प्रतीक्ष्यते । पूजनार्थमिति शेषः ॥ ॥६॥

**मनुष्ययागसंभवं न मीयते ह्रियत्तया ।**
**फलं हि पात्रसद्गुणानुरूपमेव वर्धते ॥७॥**

देवपितृमनुष्यभूतब्रह्मयज्ञमध्ये मनुष्ययागसंभवं मनुष्ययागःहन्तकारः तत्सम्भवं फलं इयत्तया परिमाणेन न मीयते न निर्णीयत एव । तुरवार्थे । हि यस्मात फलं मनुष्ययागस्येति शेषः । पात्रसद्गुणानुरूपम् । पात्रस्यातिथेः ये सद्गुणाः श्रोत्रियत्वाकामहतत्वादयस्तदनुरूपं तदनुगुणमेव । वर्धते, विपुलीभवति । तस्मादेतावदिति परिमातुं न शक्यते इत्यर्थः । पितृदेवयज्ञादिषु फलं पित्रनुरूपं देवानुरूपमिति नास्ति भेदः । सर्वेषामपि तुल्यत्वात् । मनुष्ययोगनु पात्रानुगुणवृद्धिह्रासभाक्त्वमियत्तया वक्तुं शक्यत इति भावः ॥ ॥७॥

**मनुष्ययागजं फलं निजार्जितैरसाधयन् ।**
**परत्र तप्यते भृशं मयार्जितं वृथेति हा ॥८॥**

मनुष्ययागः आतिथ्यं तज्जन्यफलं स्वर्गलोके देवैः क्रियमाणस्यातिथ्यं तत् । निजार्जितैः । स्वेनार्जितैर्धनादिभिः । असाधयन् । आतिथ्ये तेषा मविनियोगादित्यर्थः । परत्र परलोके । मयार्जितं वृथा भवेदिति भृशं अत्यन्तं तप्यते शोकेनेति शेषः । हाकष्टमिति स्वयं शोचति ॥ ॥८॥

**अनातिथिसात्कृतिर्हि या धनस्य सा दरिद्रता ।**
**विवेकहीनएव तामुपैति नो विवेकवान् ॥९॥**

धनस्य विद्यमानस्य या, अनर्थिसात्कृतिः । अर्थिसात्कृतिः, अर्थ्यधीनतापादनं न अर्थिसात्कृतिः अनर्थिसात्कृतिः आतिथ्येन विनियोगाभावः,

इति यावत् । सा धनवतो दरिद्रता , निस्स्वत्वं । तां दरिद्रताम् । विवेकहीन एव, युक्तायुक्तविवेकरहितमूढ एव उपैति प्राप्नोति । विवेकवानु चितज्ञः । नोपैति, न प्राप्नोतीत्यर्थः । अत्रार्थिशब्देन प्रकरणादतिथयो गृह्यन्ते ॥ ॥९॥

**स्वनासिकासमर्पितं शिरीषकं विशुष्यति ।**
**सुदूरतोऽतिथिः पुनः प्रसादहीनदर्शनात् ॥१०॥**

शिरीषकं । अतिमृदुळं शिरीषपुष्पम् । स्वनासिकासमर्पितम् , स्वनासिकयाघ्रातं सत् । विशुष्यति, विशोषं ग्लानिमेति । अतिथिःपुनः सुदूरतः, सार्वविभक्तिकःतसिः । अतिदूरे । प्रसादहीनदर्शनात् । अप्रसन्नमुखदर्शनात् विशुष्यतीत्यनुषज्यते । शिरीषम्लानतायां स्वानासिकासमर्पणरूपप्रयत्नापेक्षा । तदर्थं सान्निध्याद्यपेक्षास्ति । अतिथिग्लानौतु सन्निध्यभावेऽपि अप्रसन्नदर्शनमात्रं हेतुरिति विशेषात् व्यतिरेकालंकारः । आतिथ्ये मुखप्रसादस्तेनातिथिस्वसमीपोपसर्पणंतत उचितसत्कार इति त्रयमपेक्षितम् । प्रथमं मुखप्रसादाभावे अतिथिर्दूरत एव म्लायत इति भावः ॥ इति नवमं कुसुमम् ॥ ॥१०॥

---

10. இனியவை கூறல் **सान्त्ववचनम् ॥**

---

**प्रतारणाविनाकृतं समादरेण संयुतम् ।**
**सुधर्मशास्त्रवेदिनां वचो हि सान्त्ववादनम् ॥१॥**

पूर्वकुसुमान्तेऽतिथिसत्कारे मुख्येतिकर्तव्यताभूतस्यमुखप्रसादनादेःसूचनात् तदुपपादनार्थं कुसुमान्तरमारभ्यते ।

वञ्चनारहितं, आदरातिशयसंयुतं धर्मशास्त्रविदां यदतिथीनुद्दिश्य

वचनं उपचारोक्तिः सान्त्ववादनमातिथ्याङ्गमुच्यत इति तल्लक्षणम् ॥१॥

**मनःप्रसादपूर्वकं समर्पणात्प्रशस्यते ।**
**मुखप्रसादसत्कृतं यदर्थिसान्त्ववादनम् ॥२॥**

मनःप्रसादः, प्रसन्नमनस्कत्वं, तत्पूर्वं यथाभवति तथा । समर्पणात्, अपेक्षितदानात् । प्रशस्यते, उत्कृष्यते । किन्तदितिचेत्तदाह । मुखप्रसादसत्कृतं, मुखप्रसादः मानसादरातिशयद्योतकः, मुखस्य शोभमानता रूपप्रसादः तेन सत्कृतं यदर्थिसान्त्ववादनं, अर्थिनां, अतिथीनां सान्त्ववादनं, अतिथिसंतोषकरं वचनं तदित्यर्थः ॥ ॥२॥

**मुखं विकासयन्पुरो यदादरान्वितं वदेत् ।**
**स एव धर्म उच्यते न तद्विना समर्पणम् ॥३॥**

मुखाम्बुजविकासपूर्वकमतिथीनुद्दिश्य गृहाश्रमिणा क्रियमाणमादरवदनमेव धर्मःश्रेयस्साधनमुच्यते , शास्त्रविद्भिरिति शेषः । तत्सान्त्ववादनं विना यन्निर्बन्धादिना समर्पणं, इष्टसमर्पणं तत् न धर्म इत्यर्थः । यतः समर्पणस्य श्रेयस्करत्वं सान्त्ववदनाधीनं तस्मात्तस्यैव धर्मत्वमिति भावः । द्वाभ्यां सान्त्ववचनस्यातिथ्यमुख्यसाधनता प्रतिपादिता ॥३॥

**समस्ततोपदायकप्रशस्तसान्त्ववादिनाम् ।**
**अनिष्टदा दरिद्रता न संभवेत्कदाचन ॥४॥**

समस्तानां तोपस्य दायकं सन्तोषस्य कारकं अत एव प्रशस्तं यत् सान्त्वं तद्वदनशीलानां अनिष्टता । अनिष्टोत्पादिनी दरिद्रता । सुखदायितत्तदिन्द्रियग्राह्यविषयस्याभावः । कदाचन कदाचिदपि । न संभवेत् । 'संतापं जनयत्प्राज्ञस्तदेवेश्वरपूजनम्' । इत्यभियुक्तोक्तेरीश्वरपूजाकारिणः अनिष्टोत्पत्तिर्न संभवतीत्यर्थः ॥ ॥४॥

**महत्सु भक्तिशालिता समस्तसान्त्ववादिता ।**
**विभूषणं द्वयं नृणां न रत्नहेमनिर्मितम् ॥५॥**

महत्सु महिमशालिषु भक्तिशालिता परमानुरागस्वभावः । समस्तेष्वपि सान्त्ववादिता । कल्याणवचनस्वभावः । इदं द्वयं नृणां विभूषणं अलङ्कारः । रत्नहेमादिनिर्मितं न विभूषणमित्यर्थः । महद्भक्तेः सान्त्ववादनहेतुतया तस्या अपि तेन सह ग्रहणं । द्वाभ्यां सान्त्ववादस्य ऐहिकफलं प्रतिपादितम् ॥ ॥५॥

**सुखप्रदार्थवाचकैःपदैः कृता हि सान्त्वना ।**
**अधर्मसंक्षयं तथा तनोति धर्मवर्धनम् ॥६॥**

सुखमिष्टं प्रददातीति सुखप्रदोयोऽर्थः तद्वाचकैः पदैःप्रयोजिता सान्त्वना सान्त्वोक्तिः । अधर्मसंक्षयं अधर्मस्य दुष्कृतस्य सम्यक् क्षयं विनाशं । तथा धर्मवर्धनं सुकृतवर्धनञ्च तनोति । यथाऽधर्मस्यात्यन्तिकक्षयं तनोति तथा धर्मस्यात्यन्तिकवर्धनं च तनोतीत्यर्थः ॥६॥

**प्रयोजिताऽतिथेः पुरः प्रियोक्तिरादरान्विता ।**
**प्रसौति नीतिसंपदं करोति धर्ममुत्तमम् ॥७॥**

अतिथेः भोजनलिप्सया गृहं प्राप्तस्य अपरिचितपूर्वस्य । पुरःपूर्वं । प्रयोजिता प्रकर्षेणयोजिता सम्यक् विवेकपूर्वं मनसा नियोजिता । आदरेण श्रद्धया अन्विता या प्रियोक्तिः सा । इहलोके । नीतिसंपदं नीतेरुत्कर्षं विनयमहिमानं नीतिप्रयुक्तं भाग्यं वा । प्रसौति उत्पादयति । उत्तमं उत्कृष्टफलदायकं धर्मं श्रेयस्साधनञ्च करोति । ऐहिकामुष्मिकफलजनकत्वात् प्रियोक्तिरवश्यं कार्येति भावः ॥ ॥७॥

**कदाप्यकाटवान्विता सुधासमानधर्मिणी ।**
**नरामरालयद्वये सुखं ददाति सान्त्वना ॥८॥**

कदापि, दुःखानुभवकालेऽपि । अकाटवान्विता कटोर्भावः काटवं तेन अन्विता काटवान्विता सा न भवतीत्यकाटवान्विता । किञ्च । सुधायाः समानो धर्मः माधुर्यं तेनान्विता, अकटुर्मधुराचेत्यर्थः । सान्त्वना, प्रियोक्तिः । नराणाममराणामालययोर्द्वयोरपि । सुखं ददाति । तस्मात्सा कार्येतिभावः । श्लोकद्वयेन सान्त्ववचनस्य ऐहिकामुष्मिकफलकत्वमुक्तम् ॥

**परप्रयुक्तसान्त्वनाफलं सुखं विदन्स्वयम् ।**
**कटूक्तिभाषणे कथं प्रवर्तते निरर्थके ॥९॥**

परेण प्रयुक्तायाः सान्त्वनायाःफलं सुखं । स्वयं विदन् स्वयमनुभवन् । निरर्थके, निष्फले, परंतु परानिष्टदायिनि, कटूक्तिभाषणे कथं प्रवर्तते? केन प्रकारेण प्रवर्तते? न केनापि प्रकारेणत्यर्थः । किन्तु ऐहिकामुष्मिकफलदायिनि सान्त्ववचन एव प्रवर्तत इत्यर्थः ॥ ॥९॥

**महाफले प्रसान्त्वने स्थिते कटूक्तिभाषणम् ।**
**सुपक्त्रिमे फले स्थिते शलाटुकादिचर्वणम् ॥१०॥**

महाफले ऐहिकामुष्मिकफलद्वयसाधिनि । प्रसान्त्वने, प्रकृष्टसान्त्ववादने स्थिते सति । तद्विहाय यत् कटूक्तिभाषणं, दुर्जनप्रयुक्तमित्यर्थः । सुपक्त्रिमे, सुपक्वे फले स्थिते तद्विहाय शलाटुकादेः अत्यन्तमपक्वस्य तदीयबाल्यावस्थस्य चर्वणं खादनं । 'आमे फले शलाटुःयाच्छुष्के वानमुभे त्रिषु' इति निघण्टुः । ऐक्यारोपान्निदर्शना ॥ ॥१०॥

इति दशमं कुसुमम् ॥

## 11. செய்ந்நன்றியறிதல் परोपकारप्रशंसा ॥

**पुरोपकारमन्तरा परस्य या ह्युपक्रिया ।**
**प्रतिक्रियां न सार्हति क्ष्मादिवोः समर्पणम् ॥१॥**

गृहस्थस्य परकृतोपकारस्मरणावश्यंभावाय सान्त्ववचनानन्तरं परोपकारप्रशंसां प्रस्तौति ॥

पुराकृतमुपकारमन्तरा । परस्य या उपक्रिया । हिःप्रसिद्धौ ॥ सा, क्ष्मादिवोः, भूलोकस्वर्लोकयोः । समर्पणं, प्रत्युपकारम् । नार्हति, प्रत्युपकारत्वेनाङ्गीकर्तुं न क्षमत इत्यर्थः ॥ ॥१॥

**उपक्रियाप्यणीयसी स्वकाल एव या कृता ।**
**प्रथीयसीं भुवोऽपि तां महाजनः प्रशंसति ॥२॥**

स्वकाले, उपकारापेक्षाकाल एव, आपत्काल इति यावत् । कृता अणीयसी अणुतराऽपि उपक्रिया कृता भवति । तां भुवो लोकादपि । प्रथीयसीं, अतिविशालां । महाजनः, उपकारज्ञः जनः।प्रशंसति, प्रस्तौति ॥

**फलागमाभिसन्धिना विनाकृता ह्युपक्रिया ।**
**फलं विशालमम्बुधेरपि स्वयं करिष्यति ॥३॥**

फलस्यागमः प्राप्तिः तस्याभिसन्धिः अभिलाषः तेन विनाकृता । 'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' इति विनायोगे तृतीया । उपक्रिया भविष्यत्कालमनभिसन्धायकृत उपकारः । अम्बुधेः, समुद्रादपि । विशालं, विस्तीर्णम् । फलं, स्वयं करिष्यति, जनयिष्यतीत्यर्थः ॥ त्रिभिः पूर्वोपकारकारणंविना कृता, आपत्काले कृता, भविष्यत्फलमनभिसंधाय कृताउपाक्रिया प्रशस्यत इत्युक्तम् ॥ ॥३॥

**परैः कृतामुपक्रियां ह्रसीयसीं तिलादपि ।**
**प्रथीयसीं धराधराद्विवेकिनस्तु मन्वते ॥४॥**

परैः, बहुत्वमविवक्षितं, परेण, पराभ्यां, परैर्वा कृतां यत्नसाधितामुपक्रियां उपकारं तिलादपि स्वल्पप्रमाणां । ह्रसीयसीमपीति अतिशयेनह्रस्वामपि । धराधरात् , मेरोरपि, महत्परिमाणशालिनोऽपि प्रथीयसीं अतिशयेन पृथुलां । विवेकिनः उपकारफलस्वरूपज्ञाः । तुरेवार्थे, विवेकिन एव मन्वते । नत्वनभिज्ञा इत्यर्थः ॥ ॥४॥

**पुराकृतोपकारवान् समाचरेन्न तादृशम् ।**
**यया स्वयं स तुष्यति प्रतिक्रियां चरेत्तु ताम् ॥५॥**

पुराकृतोपकारवान् । पूर्वं लब्धोपकार इत्यर्थः । सः, तादृशं वित्तकालानुगुणमुपकारमेव समाचरेदिति न । किन्तु । सः प्रत्युपकार्यः। यया, प्रतिक्रियया । स्वयं तुष्यति । तां प्रतिक्रियां । चरेत् अनुतिष्ठेत् इत्यर्थः ॥ ॥५॥

**स्वदुःखहानिकारिणामुपक्रियां तु न त्यजेत् ।**
**प्रमाणशीलशालिनां सुबन्धुतां न विस्मरेत् ॥६॥**

स्वस्य दुःखानां हानिः नाशः तत्कारिणां उपकर्तृणामित्यर्थः । उपक्रियाम् । साहाय्यकम् । नत्यजेत्तु । न त्यजेदेवेत्यर्थः । उपकारत्यागो-नाम किमनेन कृतं ममेति कृतघ्नता । तादृशमवगुणंन प्रकाशयेदित्यर्थः दृष्टान्तार्थमाह प्रमाणेति । प्रमाणानि धर्मशास्त्रादीनिशीलं तदनुष्ठान रूपआचारः तेन शालन्त इति तच्छालिनां धर्मशास्त्रज्ञानतदर्थानुष्ठान वतां महतां । सुबन्धुतां न विस्मरेत् । बांधवहेतुभूतधर्मनिष्ठतां, यादृश निष्ठया । ते स्निह्यन्ति तामित्यर्थः। सर्वदा स्मरेदेवेत्यर्थः ॥ ॥६॥

**स्वबाष्पसंमृजाकृतामुपक्रियां महाशयाः ।**
**स्मरन्ति सप्तजन्मसु स्वयं हि चेतसा सदा ॥७॥**

स्वस्य बाष्पाणां दुःखानुभाविनां संमृजा सम्यक् मार्जनं दुःखपरिहारेण बाष्पोत्पत्तिप्रतिबन्धः संमृजांकुर्वन्तीति संमृजाकृतः तेषामुपक्रियां । तत्कृतोपकारं । महाशयाः निर्मलचित्ता इत्यर्थः । सप्तजन्मसु भाविषु । सदा । स्वयं निमित्तांतरमन्तरेण । चेतसा, मनसा । स्मरन्ति विभावयन्तीत्यर्थः । तथाच काळिदासः 'तच्चेतसा स्मरति नून मबोधपूर्वं भावस्थिराणि जननान्तरसौहृदानि' इति ॥ ॥७॥

**परोपकारविस्मृतिर्न युज्यते मनागपि ।**
**अपक्रिया तु तत्कृता तदैव विस्मृता वरा ॥८॥**

परेषामुपकारः परैःकृत उपकारः स्वेष्टसाधनं स्वानिष्टनिवारणं वा तस्य विस्मृतिः । मनागपि, किञ्चिदपि । नयुज्यते, सर्वथा न युक्तेत्यर्थः। तत्कृता, परकृता । अपक्रियातु, तदैव, अपकारकाल एव विस्मृता । वरा युक्तेत्यर्थः ॥ ॥८॥

**पुराकृतोपकारजं फलं मनस्समाहितम् ।**
**विनाशयेत्पुनः कृतामपक्रियां वधाधिकाम् ॥९॥**

पुराकृतोपकाराज्जातं, फलं इष्टप्राप्त्यनिष्टनिवृत्यादिरूपं । मनस्समाहितं, मनसि सम्यगाहितं कृतज्ञेनेति शेषः । पुनस्तेन कृतामपक्रियां वधाधिकामपि । विनाशयेत्, विस्मारयेदित्यर्थः॥ कृतज्ञत्वमनिष्टमर्षणं च महागुणाविति भावः ॥ ॥९॥

**समस्तशास्त्रवन्दितान्महापथाच्च्युतात्मनाम् ।**
**विधीयते तु निष्कृतिः कृतद्रुहां तु नेष्यते ॥१०॥**

समस्तशास्त्रैः श्रुतिस्मृतिपुराणेतिहासैः वन्दितात् स्तुतात् । महापथात् धर्मानुष्ठानाधर्मपरिहाररूपात् । च्युतात्मनां, प्रस्खलितचित्तानां । निष्कृतिः, पापपरिहारार्थं प्रायश्चित्तं विधीयत एव । कृतद्रुहां, कृतघ्नानांतु निष्कृतिः नेष्यते, न विधीयते । 'कृतघ्ने नास्ति निष्कृतिः' इत्यादि शास्त्रादिति भावः ॥ ॥१०॥

इत्येकादशं कुसुमम् ॥

---

12. நடுவு நிலைமை **अपक्षपातित्वप्रशंसा ॥**

**महत्सु वा द्विषत्सु वा कदाप्यवीक्षितेषु वा ।**
**समानमेव वर्तनं सतां हि कीर्तिवर्धनम् ॥१॥**

उपकारविस्मरणमयुक्तमित्युक्तं, तत्प्रयुक्तपक्षपातनिवर्तनाय तदनन्तरमपक्षपातित्वप्रशंसा प्रस्तूयते । सुहृत्सु मित्रेषु । द्विषत्सु, द्वेषिषु । कदाप्यवीक्षितेषु, नूतनतया सौहृदशात्रवरहितेषु, उदासीनेष्वित्यर्थः । एवं त्रिविधेषु । समानं, न्यूनाधिकरहितं । वर्तनं, उपचारः । सतां कीर्तिवर्धनं हि यशस्करं हि । तस्मात् सर्वत्रतुल्यवृत्तिरेव युक्तेत्यर्थः ॥१॥

**अपक्षपातधर्मिणामपक्षयं विना रमा ।**
**प्रवर्धते निरन्तरं तदीयसन्ततिष्वपि ॥२॥**

अपक्षपातधर्मिणां पक्षे अरिमित्रोदासीनेषु एकस्मिन् पातः स्नेहतत्कार्यप्रवृत्तिः पक्षपातः स न भवतीत्यपक्षपातः सर्वतुल्यता स एव धर्मो येषां ते । अपक्षपातधर्मिणः, तेषां । रमा, लक्ष्मीः । अपक्षयं विना । पक्षपातवतां भाग्यस्य यथापक्षयोभवति तादृशमपक्षयं विना । निरन्तरं,

निर्विघ्नं । प्रवर्धते, न तावन्मात्रम् । किन्तु । तदीय सन्ततिष्वपि प्रवर्धेत इत्यनुषज्यते । वंशपारंपर्येण भाग्यवृद्धिरुत्तरोत्तराधिका भवतीतिभावः॥

**तदात्वसौख्यदायिका न पक्षपातसंभवाः ।**
**उपाददीत संपदो यदुत्कटासुखप्रदाः ॥३॥**

पक्षपातेनातुल्यवर्तनेन संभवाः सम्भूताः । तदात्वसौख्यदायिकाः । तदात्वे तत्काले सौख्यस्य दायिका उत्पादयित्रीरपि । संपदः, नोपाददीत । किंतु त्यजेदेवेत्यर्थः । यत्, यस्मात् । उत्कटासुखप्रदाः, उत्कटस्य तादात्विकसुखापेक्षयाऽसुखस्य प्रदाः । उत्पादयित्र्यः, तस्मात् ताः त्यजेदित्यर्थः ॥ ॥३॥

**अपक्षपातवानयं तथैष पक्षपातवान् ।**
**इति स्फुटं विजानते तदीयपुत्रसंपदा ॥४॥**

अयमपक्षपातवान् अपक्षपातशीलः । सर्वत्रतुल्यवृत्तिरित्यर्थः । तथा तद्वत् । एष पक्षपातवान् । इति उक्तप्रकारं । तदीयपुत्रसम्पदा । तदीयाः पक्षपातापक्षपातवतां संबन्धिनो ये पुत्राः, तेषां संपदा अविद्यमानया विद्यमानयाचेत्यर्थः । स्फुटं विजानते । विशेषं जानन्तीत्यर्थः॥

**श्रियःप्रवृद्धिसंक्षयौ सताऽसता च नेति न ।**
**इति प्रजानतां नृणां तटस्थता विभूषणम् ॥५॥**

सता समीचीनेन कर्मणा । असता असमीचीनेन दुष्कर्मणा । श्रियः, भाग्यस्य । प्रवृद्धिसंक्षयौ । वृद्धिनाशौ नसम्भवतइतिन । सम्भवत एवेत्यर्थः । इति उक्तप्रकारं । प्रजानतां । प्रकर्षेणजानतां । नृणां पुरुषाणां । तटस्थतां अपक्षपातित्वं । विभूषणं अलङ्कारः ॥

**मनस्तटस्थतां विना प्रवर्तते यदान्यथा ।**
**तदैव भावयेदयं स्वहानिमेव भाविनीम् ॥६॥**

यस्य मनः, तटस्थतां, मध्यप्रवृत्तित्वं, विना, हित्वा । यदा, यस्मिन्काले । अन्यथा, पक्षपातरूपप्रकारान्तरेण, प्रवर्तते । तदैव अयं । पक्षपातप्रवृत्तमनस्कः । भाविनीं, भविष्यतीं । स्वहानिं, स्वविनाशमेव । भावयेत् ॥ ॥६॥

**अपक्षपातवर्तिनां दरिद्रतां विपश्चितः ।**
**न भावयन्ति दीनतां विभावयन्ति सम्पदम् ॥७॥**

अपक्षपातवर्तिनां । अपक्षपाते समतायां वर्तन्त इति तथा तेषां । सर्वेषां तुल्यवदुपचारेण सम्भावितां दरिद्रतां । विपश्चितः, पण्डिताः दीनतां न भावयन्ति । अयं दीनतामापन्न इति नमन्वत इत्यर्थः। किंतु। संपदं, भाग्यमेव विभावयन्ति । 'तनिम्ना शोभन्ते गळितविभवाश्चार्थिषु नृपाः'—इति न्यायादिति भावः ॥ ॥७॥

**तुलान्तराळशूकवत् द्वयोः समां धुरं वहन् ।**
**ऋजुर्यदा भवेत् पुमानपक्षपातभूषणः ॥८॥**

तुलान्तराळशूकवत् । घटामध्यभागगतकण्टकशब्दितनाराचवत् तादृशशूकमिव। द्वयोः, पक्षयोः अंसयोश्च । समां धुरं, तुल्यपरिमाणभारं । रागद्वेषादिरहिततया पक्षद्वयेऽपि सम्भावितसाध्वसाधुभावग्रहणनिराकारादिरूपसम्यग्दिदृक्षितकार्यभारं तुल्यं वहन् पुमान् ऋजुः। एकनरपक्षपतनरहिततया समानः उपरिगतकण्टकेन तुल्यस्थान.......यदाभवेत् ॥ संभावनायां लिङ् । तदाऽपक्षपातभूषणः । पक्षपाताभावरूपमहागुणशोभी भवतीत्यभिप्रायः ॥ ॥८॥

**मनोगतार्जवान्वितं दृढं वचस्यवस्थितम् ।**
**ऋजुत्वमेव वाग्मिनामपक्षपातमूचिरे ॥९॥**

दृढं यथातथा मनोगतार्जवान्वितं । ऋजोर्भावः आर्जवं । मनोगतं मनस्यवस्थितं यदार्जवं रागद्वेषादिप्रयुक्तैकपक्षसाधनदुराग्रहादिहीनतया मनोगतकौटिल्यप्रयोजकहेतुनिराकरणेन योऽयमृजुभावः तेनान्वितं । वचस्यवस्थितं, ऋजुत्वमेव । वाग्मिनां सभासदां । अपक्षपातं, पक्षपात-भिन्नं धर्मं । ऊचिरे, महान्त इति शेषः । श्लोकद्वयेन व्यवहारनिर्णाय-कानां सभागतानां मनस्यवस्थिते ऋजुभावराहित्ये वचोगतमार्जवमात्र-मपक्षपातधर्मसाधनं न भवति । किंतु द्वयं मिळितमित्युक्तम् ॥ ॥९॥

**स्वपण्यरक्षणोपमं परस्य पण्यरक्षणम् ।**
**वणिक्तटस्थतापदं स्वभागधेयवर्द्धनम् ॥१०॥**

पणितुमर्हं पण्यं तस्य रक्षणेन आदायानुसारिणा व्यवहारेण उपमा यस्य तत् । तथा परस्य अन्यस्य । पण्यरक्षणं । वणिजःतटस्थतायाः अपक्षपातस्य स्थानं । स्वभागधेयवर्द्धनं स्वकीय भाग्यवर्द्धनंच भवतीत्यर्थः॥

इति द्वादशं कुसुमम् ॥

---

13. அடக்கமுடைமை **शमः ॥**

---

**मनोवचःकळेबरं शमं नयन् दिवं व्रजेत् ।**
**यथागतं प्रवर्तयन् महातमोऽवगाहते ॥१॥**

पापप्रवेशपरिहाराय तदुपशमार्थं अधिकारान्तरंप्रस्तूयते। अपक्षपाति-नः, परस्मिन्निव स्वस्मिन्नपि दोषदर्शनादेव भवतीति अपक्षपातप्रतिपा दनानन्तरं (शमा) तदारम्भः ॥

मनः । चक्षुरादीन्द्रियाणां तत्तद्विषयप्रवर्तकमन्तःकरणं । वचः वागिन्द्रियं निन्दासाधनं । कळेबरं शरीरञ्चेति करणत्रयं । प्राण्यङ्गत्वादेकवद्भावः । शमं दुष्प्रवृत्त्युपशमं । नयन् । नयतेः द्विकर्मकत्वात् उभयं द्वितीया एवं शान्तमनोवाक्कळेबरः पुरुषः । दिवं, स्वर्गं । व्रजेत्, गच्छेत् । यथागतं, मनआदिकं यथागतमिच्छति । तथा प्रवर्तयन् पुरुषः। महातमः। अन्धतामिस्रं नाम नरकं अवगाहते। प्रविशतीत्यर्थः ॥

**शमाभिधं महाधनं प्रसाधयेत्प्रयत्नवान् ।**
**न सार्वभौमतादिकं महाधनं प्रचक्षते ॥२॥**

शमाभिधं प्रशमाभिधानं । महाधनं, उत्तमलोकसम्पादकं तन्मूल्यतार्हं । प्रयत्नवान्, उत्कृष्टमनोनिग्रहादियत्नवान् । प्रसाधयेत् । सर्वस्या भूमेः राजा सार्वभौमः । अणि अनुशतिकादित्वादुभयपदवृद्धिः । तस्य भावः। तत्ता। आदिः यस्यतत्तथा। शैषिकःकप् । महाधनं नप्रचक्षते। 'राज्यान्ते नरकंध्रुवं--'इति निन्दितत्वादिति भावः ॥ ॥२॥

**मनोवपुर्वचश्शमं धनं ममेति भावयन् ।**
**वशीकरोति तत्त्रयं य एष सद्भिरीड्यते ॥३॥**

मनोवपुर्वचसां शमं उपशान्तिं । ममधनं परलोकसम्पादकत्वादिति। भावयन् निश्चिन्वन् । यः । तत्त्रयं, तेषां त्रयं । वशीकरोति स्वायत्तीकरोति । एषः, उपशान्तकरणत्रयः । सद्भिः, शमप्रधानैः ईड्यते, स्तूयते ॥ ॥३॥

**गृहाश्रमस्थितस्त्रयं वशे विधाय शास्त्रतः ।**
**महत्त्वमार्जयेत्परं महामहीधरादपि ॥४॥**

गृहाश्रमनिष्ठः । त्रयं वाङ्मनःकायानामिति शेषः । शास्त्रतः विधि-निषेधात्मकात् । वशेविधाय । स्वायत्तं विधायेत्यर्थः । विहिते प्रवर्तयन् । महामहीधरात्, सुमेरुशैलादपि । महत्त्वं, अचञ्चलत्वं । आर्जयेत्, संपादयेत् ॥ ॥४॥

**अहंतया विनाकृतः शमो हि सर्वभूषणम् ।**

**श्रुतं कुलं धनं बलं विशेषतो विभूषयेत् ॥५॥**

अहमोभावः अहन्ता । अहमेव सर्वोत्कृष्ट इति मनस उत्सेकः । तया विनाकृतः, अहंभावरहितः । शमः करणत्रयवशीकरणं । सर्वभूषणं हि सर्वेषां साधारणविभूषणमिति प्रसिद्धं, तत्रापि श्रुतं, शास्त्रसंपत्तिः । कुलं, महावंशः। धनं, अपेक्षितसर्ववस्तुसमृद्धिः । बलं, शरीरदार्ढ्यंचेति । अहंताहेतुभूतश्रुतादिचतुष्टयसद्भावेऽपि गर्वरहितःशमः, पूर्वोक्तचतुष्टयं । विशेषतः अधिकं । विभूषयेत्, तच्चतुष्टयवंन विभूषयेदिति यावत् शमसद्भाव एव श्रुतादीनामलङ्कारता । नान्यथेत्यर्थः ॥ ॥५॥

**वशे विधाय पञ्चकं पुमान् हि कूर्मवत्ततः ।**

**समश्नुयान् महाफलं स्वसप्तजन्मसंभवम् ॥६॥**

पुमान् । अधिकारी । पञ्चकं इन्द्रियाणामिति शेषः । वशे विधाय स्वाधीनतायां विधाय । स्वाधीनं कृत्वेत्यर्थः । तत्र कूर्मवदिति दृष्टान्तः । यथाहि कूर्मः पादचतुष्टयशिरोरूपावयवपञ्चकं अन्तस्संकुचितं करोति । तथा यथेष्टबहिःप्रचारादिन्द्रियपञ्चकं निवृत्य अन्तर्मुखं विधाय तादृशे-न्द्रियप्रत्याहारेण । स्वसप्तजन्मसंभवं । स्वस्य सप्तसु जन्मसु सम्भवं सुकृत-फलं समश्नुयात् । अनुभुञ्जीतेत्यर्थः । सम्भावनायां लिङ् ॥ ॥६॥

**अदक्षिणोऽन्यनिग्रहे वशे करोतु जिह्विकाम् ।**

**तथा न चेदयं पतेत्कुवागुपार्जितापदि ॥७॥**

अन्यनिग्रहे, अन्येषामिन्द्रियाणां निग्रहे । अदक्षिणः । असमर्थोऽपि जिह्विकामेवा वशे, स्वाधीनतायां । करोतु प्रार्थनायां लोट् । तथा नचेत् तादृशप्रकारेण जिह्वानिग्रहेऽपि असमर्थश्चेत् । अयं, अनिगृहीतवागिन्द्रियः । कुवागुपार्जितापदि, कुत्सितवागुपार्जितायां महानरकरूपायां आपदि । पतेत् निमग्नो भवेदित्यर्थः ॥ ॥७॥

**कटूक्तिवाडवानलः स एक एव यद्यपि ।**
**सुकर्मसङ्घसंभवं फलोत्करं विनिर्दहेत् ॥८॥**

कटूक्तिरेव वाडवः वडवासम्बन्धी अनलःयोऽयमस्ति । स यद्यपि एक एव । सुकर्मसम्भवं - शोभनकर्मसङ्घसम्भूतं । फलानामुत्करं समुदायं । विनिर्दहेत्, विशेषेण निर्दहेत् । 'एकोहि दोषो गुणसंनिपाते निमज्जतीन्दोःकिरणेष्विवाङ्कः '—इतिन्यायस्यायमपवादः ॥ ॥८॥

**महाग्निदाहसंभवं व्रणं क्रमेण नश्यति ।**
**कटूक्तिदाहजं व्रणं कदापि नैव शाम्यति ॥९॥**

महाग्नेरिंधनैरिंध्यमानस्याग्नेर्दाहेन सम्भवं सम्भूतं । शरीरगतं व्रणं कालक्रमेण नश्यति । कटूक्तिभिः यो दाहः परस्येत्यर्थः । तेन जातं व्रणं मानसिकं तु । कदापि । वहुकालातिपातेऽपि । नशाम्यत्येव । उपमानापेक्षया कटूक्तेरुपमेयस्य विशेषप्रतीतिः व्यतिरेकः ॥ ॥९॥

**स्वयं क्रुधोऽभिरक्षितं सुविद्यया परिष्कृतम् ।**
**प्रशान्तमाश्रमास्थितं सदा दिदृक्षते वृषः ॥१०॥**

क्रुधः । कोपात् । स्वयं अभिरक्षितं । सुविद्यया, परापररूपेण द्विधाभूतया विद्यया । परिष्कृतं, अलंकृतं । प्रशान्तमाश्रमस्थितं पुरुषं ।

वृषः, धर्मः । सदा दिदृक्षते । द्रष्टुमिच्छति । तद्दर्शने कृतोत्कण्ठः समयं सदा प्रतीक्षत इत्यर्थः । शमाचारयोः हेतुहेतुमद्भावात् शमस्वरूपहेतु (वर्णना) नन्तरं हेतुमानाचारोऽभिधीयते इति सङ्गतिः ॥ ॥१०॥

इति त्रयोदशं कुसुमम् ॥

---

14. ஒழுக்கமுடைமை **सुशीलम्** ॥

**सुशीलमेव पालयेत् समस्तभाग्यदायकम् ।**
**असोरपि प्रियं यतो वृथा परस्य जीवनम् ॥१॥**

समस्तभाग्यदायकं । समस्तभाग्यस्य निखिलत्रिवर्गस्य दायकं उत्पादकं । सुशीलं । शोभनसमुदाचार ( परं ) पालयेत् । यतःकारणात् । सर्वापेक्षया प्रियतमादसोः प्राणादपि प्रियं प्रीतिविषयीभूतं तत इत्यर्थः। किञ्च । यतःकारणात् । परस्य आचारहीनस्य जीवनं । वृथा व्यर्थीभवति । तत इत्यर्थः । यत इत्यस्य काकाक्षिन्यायेनोभयत्र संबन्धः । प्राणसार्थक्यापादकतया प्राणादपि प्रियतमस्य सदाचारस्य पालनमावश्यकमित्यभिप्रायः । एवकारः प्राणपरिपालनव्यावर्तकः । प्राणहानावपि सदाचारं न परित्यजेत् ॥ ॥१॥

**समादरेण पालयेत् सुशीलमेव तत्र च ।**
**प्रकृष्टसौख्यसाधकं विवेचयन्सुचेतसा ॥२॥**

सुचेतसा । अवहितमनसा । अत्र, इहलोके । तत्रच, लोकान्तरेच। प्रकृष्टसौख्यसाधकं उत्कृष्टसुखसाधनं । विवेचयन् , विचारेणनिश्चिन्वन्।

सुशीलं, शोभनाचारं । समादरेण, समीचीनश्रद्धया । पालयेत् । अनाचारेण अप्रतिहतं रक्षेदित्यर्थः ॥ ॥२॥

**कुलीनतामवाप्नुयात् सुवृत्तमेव पालयन् ।**
**निकृष्टजातितामियादपालयन्सुवृत्तताम् ॥३॥**

सुवृत्तं शोभनमाचारं पालयन्नेव । रमणीयाचारनिष्ठ एव कुलीनतामवाप्नुयात् । सुवृत्ततां । शोभनं वृत्तं यस्य स सुवृत्तः तस्य भावः तत्ता तामपालयन् यथोक्तवर्णाश्रमधर्माननुतिष्ठन् । निकृष्टजातितां, श्वसूकर चण्डालादिजन्मवत्तां । इयात्, प्राप्नुयात् ॥ " शूद्रेऽपि दृश्यते वृत्तं ब्राह्मणेतु न दृश्यते । शूद्रोऽपि ब्राह्मणो ज्ञेयः ब्राह्मणश्शूद्र एवच"॥ इत्यादिस्मृतेरिति भावः ॥ ॥३॥

**अधीतवेदविस्मृतौ पुनः स्मरन्न हीयते ।**
**सुवृत्ततामपालयन्महाकुलादधः पतेत् ॥४॥**

अधीतस्य गुरुमुखादधिगतस्य वेदस्य विस्मृतौ । पुनःस्मरन् । अधीतवेदं पुनरभ्यस्यन् । न हीयते स्ववर्णादितिशेषः सुवृत्ततामपालयन्। परित्यक्तसमुदाचारः । महाकुलात् उत्तमवर्णात् । अधः निकृष्टजातौ, पतेत् । पतितस्य पुनः सदाचारनिष्ठायामनधिकारात् प्रतिसमाधानं नयुज्यत इति भावः ॥ "अधीतमपि यो वेदं विमुञ्चति यदा नरः । भ्रूणहा सतु विज्ञेयः वियोनिमधिगच्छति "॥ इति ब्रह्मोज्झत्वस्य विरुद्धयोनिप्राप्तावुक्तायामपि । " संवत्सरं व्यवहारः तत्पापमपसेधति" इति प्रायश्चित्तस्मरणात् प्रतिसमाधानं युक्तमिति शेषः ॥ ॥४॥

**परप्रकर्षनिस्सह न संपदास्थिता यथा ।**
**तथा सुवृत्तनिस्पृहे कुलोन्नतिर्न तिष्ठति ॥५॥**

परप्रकर्षस्य परोत्कर्षस्य निस्सहः न सहत इत्यर्थे निरो नञर्थस्य "सुप्सुपा" इति समासः योगविभागात्। परोत्कर्षमसहमान इत्यर्थः परोत्कर्षासहिष्णौ। संपदस्तिता संपदो भाग्यस्य अस्तिता विद्यमानता। "अस्ति"इति तिङन्तप्रतिरूपकमव्ययम्। ततो भावार्थे तल्, यथा। तथा सुवृत्तनिस्पृहे शोभनाचारश्रद्धारहिते। कुलोन्नतिः, कुलागतमौन्नत्यं न तिष्ठति। पूर्वस्थितमपि, नश्यतीति भावः॥ ॥५॥

**सुवृत्तहानिसंभवां कुलच्युतिं विवेचयन्।**
**महामनाः स्वशीलतः कदापि न प्रमाद्यति॥६॥**

सुवृत्तहानिसंभवां। सदाचारभ्रंशसंभाविताम्। कुलच्युतिम्। महाकुलादधोगतिम्। विवेचयन्, विचारेण जानन्। महामनाः, चापल्यरहितमनस्कः। स्वशीलतः, स्ववर्णाश्रमविहितसदाचारात्। कदापि, कालत्रयेऽपि। नप्रमाद्यति, नभ्रश्यतीत्यर्थः। "जुगुप्साविरामप्रमादार्थानामुपसंख्यानं" इति पञ्चमी। ततस्तसिल्॥ ॥६॥

**सुवृत्ततत्परः पुमान्महोन्नतिं स विन्दति।**
**जहाति यः सुवृत्ततां स याति निन्दनीयताम्॥७॥**

यःपुमान् सुवृत्ततत्परः। सदाचारतात्पर्यवान्। सः। महोन्नतिं। कुलादिप्रयुक्तमुत्तमत्वम्। विन्दति। लभते। यःपुमान् सुवृत्ततां जहाति। स निन्दनीयतां, निन्दार्हत्वं। याति, प्राप्नोति। पञ्चभिःश्लोकैः आचारपरिपालनत्यागाभ्यां संभावितगुणदोषौ प्रतिपादितौ॥ ॥७॥

**सुवृत्तनिष्ठता परं प्रसौति धर्मसन्ततिम्।**
**चिनोति पापमुत्कटं कपूयशीलवर्तनम्॥८॥**

सुवृत्तनिष्ठता सुवृत्ते सदाचारे निष्ठा यस्य स सुवृत्तः तस्य भावः तत्ता । परम्, अधिकम् । धर्मसन्ततिम् । धर्माणामलौकिकश्रेयस्साधनानां सन्ततिं समूहम् । प्रसौति उत्पादयति । कपूयशीलवर्तनं । कुत्सिताचारः तत्रवर्तनं । चिनोति, उपचिनोतीत्यर्थः । अनेन श्लोकेनाचारानाचारयोः पारलौकिकफलं प्रतिपादितम् ॥ ॥८॥

**अनर्घशीलशालिनां न युज्यते मनागपि ।**
**परस्य दुःखदायकं यदृच्छया कुभाषणम् ॥९॥**

अनर्घशीलशालिनां । अतिप्रशस्तशीलवतामपि । परस्य दुःखदायकं । अनिष्टप्रदम् । यदृच्छया । मनोऽभिनिवेशं विना प्रयुक्तमपि । कुभाषणम् कुत्सितशब्दभाषणम् ॥ मनाक् ईषदपि न युज्यते अयुक्तमित्यर्थः ॥९॥

**महाजनप्रवर्तितं सुशीलमाचरेन्न यः ।**
**समस्तशास्त्रपारगोऽप्यसौ हि मूर्ख उच्यते ॥१०॥**

महाजनप्रवर्तितम् । कालदेशानुसारेण शिष्टजनप्रवर्तितं । सुशीलं, शोभनाचारं । यःपुमान् नाचरेत्, नानुतिष्ठेत् । असौ, पुरुषः। समस्त शास्त्रपारगोऽपि । मूर्खः, कृत्याकृत्यविवेकरहित उच्यते । हिःप्रसिद्धौ । तस्मात् प्रसिद्धं देशाचारादिकमपि अनुतिष्ठेदित्यर्थः ॥ ॥१०॥

इति सुनीति कुसुममालायाम् ॥

चतुर्दशं कुसुमम् ॥

# திருக்குறள்.

## அறத்துப்பால்,

## பாயிரம்.

### 1. கடவுள் வாழ்த்து. भगवद्भक्तिः ॥

அகர முதல வெழுத்தெல்லா மாதி
பகவன் முதற்றே யுலகு. (1)

கற்றதனா லாய பயனென்கொல் வாலறிவன்
நற்றா டொழாஅ ரெனின். (2)

மலர்மிசை யேகினான் மாணடி சேர்ந்தார்
நிலமிசை நீடுவாழ் வார். (3)

வேண்டுதல் வேண்டாமை யிலானடி சேர்ந்தார்க்
கியாண்டு மிடும்பை யில. (4)

இருள்சே ரிருவினையுஞ் சேரா விறைவன்
பொருள்சேர் புகழ்புரிந்தார் மாட்டு. (5)

பொறிவாயி லைந்தவித்தான் பொய்தீ ரொழுக்க
நெறிநின்றார் நீடுவாழ் வார். (6)

தனக்குவமை யில்லாதான் றாள்சேர்ந்தார்க் கல்லால்
மனக்கவலை மாற்ற லரிது (7)

அறவாழி யந்தணன் றாள்சேர்ந்தார்க் கல்லாற்
பிறவாழி நீந்த லரிது. (8)

கோளில் பொறியிற் குணமிலவே யெண்குணத்தான்
தாளை வணங்காத்தலை. (9)

பிறவிப் பெருங்கட னீந்துவர் நீந்தார்
இறைவ னடிசேரா தார். (10)

## 2. வான் சிறப்பு. वर्षमहिमा ॥

வானின் றுலகம் வழங்கி வருதலாற்
றானமிழ்த மென்றுணரற் பாற்று. (1)
துப்பார்க்குத் துப்பாய துப்பாக்கித் துப்பார்க்குத்
துப்பாய தூஉ மழை. (2)
விண்ணின்று பொய்ப்பின் விரிநீர் வியனுலகத்
துண்ணின் றுடற்றும் பசி. (3)
ஏரி னுழாஅ ருழவர் புயலென்னும்
வாரி வளங்குன்றிக் கால். (4)
கெடுப்பதூஉங் கெட்டார்க்குச் சார்வாய்மற் றாங்கே
யெடுப்பதூஉ மெல்லா மழை. (5)
விசும்பிற் றுளிவீழி னல்லான்மற் றாங்கே
பசும்புற் றலைகாண் பரிது. (6)
நெடுங்கடலுந் தன்னீர்மை குன்றுந் தடிந்தெழிலி
தானல்கா தாகி விடின். (7)
சிறப்பொடு பூசனை செல்லாது வானம்
வறக்குமேல் வானோர்க்கு மீண்டு. (8)
தானம் தவமிரண்டும் தங்கா வியனுலகம்
வானம் வழங்கா தெனின். (9)
நீரின் றமையா துலகெனின் யார்யார்க்கும்
வானின் றமையா தொழுக்கு. (10)

## 3. நீத்தார் பெருமை. महामुनिमहिमा ॥

ஒழுக்கத்து நீத்தார் பெருமை விழுப்பத்து
வேண்டும் பனுவற் றுணிவு (1)
துறந்தார் பெருமை துணைக்கூறின் வையத்
திறந்தாரை யெண்ணிக்கொண் டற்று. (2)

இருமை வகைதெரிந் தீண்டறம் பூண்டார்
பெருமை பிறங்கிற் றுலகு. (3)
உரனென்னுந் தோட்டியா னோரைந்துங் காப்பான்
வரனென்னும் வைப்பிற்கோர் வித்து. (4)
ஐந்தவித்தா னாற்ற லகல்விசும்பு ளார்கோமா
னிந்திரனே சாலுங் கரி (5)
செயற்கரிய செய்வார் பெரியர் சிறியர்
செயற்கரிய செய்கலா தார். (6)
சுவையொளி யூறோசை நாற்றமென் றைந்தின்
வகைதெரிவான் கட்டே யுலகு (7)
நிறைமொழி மாந்தர் பெருமை நிலத்து
மறைமொழி காட்டி விடும். (8)
குணமென்னுங் குன்றேறி நின்றார் வெகுளி
கணமேயுங் காத்த லரிது. (9)
அந்தண ரென்போ ரறவோர்மற் றெவ்வுயிர்க்குஞ்
செந்தண்மை பூண்டொழுக லான். (10)

---

## 4. *அறன் வலியுறுத்தல்.* **धर्ममहिमा ॥**

---

சிறப்பீனுஞ் செல்வமு மீனு மறத்தினூஉங்
காக்க மெவனோ வுயிர்க்கு. (1)
அறத்தினூஉங் காக்கமு மில்லை யதனை
மறத்தலி னூங்கில்லை கேடு. (2)
ஒல்லும் வகையா னறவினை யோவாதே
செல்லும்வா யெல்லாஞ் செயல். (3)
மனத்துக்கண் மாசில னாத லனைத்தறன்
ஆகுல நீர பிற. (4)
அழுக்கா றவாவெகுளி யின்னாசொன் னான்கும்
இழுக்கா வியன்ற தறம். (5)

அன்றறிவா மென்னா தறஞ்செய்க மற்றது
பொன்றுங்காற் பொன்றாத் துணை. (6)
அறத்தா றிதுவென வேண்டா சிவிகை
பொறுத்தானோ டூர்ந்தா னிடை. (7)
வீழ்நாள் படாஅமை நன்றாற்றி னஃதொருவன்
வாழ்நாள் வழியடைக்குங் கல். (8)
அறத்தான் வருவதே யின்பமற் றெல்லாம்
புறத்த புகழு மில. (9)
செயற்பால தோரு மறனே யொருவற்
குயற்பால தோரும் பழி. (10)

இவை நான்கும் பாயிரம்

---

## (இல்லறவியல்) 5. இல்வாழ்க்கை. गार्हस्थ्यम् ||

---

இல்வாழ்வா னென்பா னியல்புடைய மூவர்க்கும்
நல்லாற்றி னின்ற துணை (1)
துறந்தார்க்குந் துவ்வா தவர்க்கு மிறந்தார்க்கும்
இல்வாழ்வா னென்பான் றுணை. (2)
தென்புலத்தார் தெய்வம் விருந்தொக்க றானென்றாங்
கைம்புலத்தா றோம்ப றலை. (3)
பழியஞ்சிப் பாத்தூ ணுடைத்தாயின் வாழ்க்கை
வழியெஞ்ச லெஞ்ஞான்று மில். (4)
அன்பு மறனு முடைத்தாயி னில்வாழ்க்கை
பண்பும் பயனு மது. (5)
அறத்தாற்றி னில்வாழ்க்கை யாற்றிற் புறத்தாற்றிற்
போஒய்ப் பெறுவ தெவன். (6)
இயல்பினா னில்வாழ்க்கை வாழ்பவ னென்பான்
முயல்வாரு ளெல்லாந் தலை. (7)

ஆற்றி னொழுக்கி யறனிழுக்கா வில்வாழ்க்கை
நோற்பாரி னோன்மை யுடைத்து. (8)

அறனெனப் பட்டதே யில்வாழ்க்கை யஃதும்
பிறன்பழிப்ப தில்லாயி னன்று. (9)

வையத்துள் வாழ்வாங்கு வாழ்பவன் வானுறையுந்
தெய்வத்துள் வைக்கப் படும். (10)

---

## 6. வாழ்க்கைத்துணை நலம். गृहिणीगुणः ॥

---

மனைத்தக்க மாண்புடைய ளாகித்தற் கொண்டான்
வளத்தக்காள் வாழ்க்கைத் துணை (1)

மனைமாட்சி யில்லாள்க ணில்லாயின் வாழ்க்கை
எனைமாட்சித் தாயினு மில் (2)

இல்லதே னில்லவண் மாண்பானா லுள்ளதேன்
இல்லவண் மாணாக் கடை. (3)

பெண்ணிற் பெருந்தக்க யாவுள கற்பென்னுந்
திண்மையுண் டாகப் பெறின். (4)

தெய்வந் தொழாஅள் கொழுநற் றொழுதெழுவாள்
பெய்யெனப் பெய்யு மழை. (5)

தற்காத்துத் தற்கொண்டாற் பேணித் தகைசான்ற
சொற்காத்துச் சோர்விலாள் பெண் (6)

சிறைகாக்குங் காப்பெவன் செய்யு மகளிர்
நிறைகாக்குங் காப்பே தலை. (7)

பெற்றாற் பெறிற்பெறுவர் பெண்டிர் பெருஞ்சிறப்புப்
புத்தேளிர் வாழு முலகு. (8)

புகழ்புரிந் தில்லிலோர்க் கில்லை யிகழ்வார்முன்
ஏறுபோர் பீடு நடை. (9)

மங்கல மென்ப மனைமாட்சி மற்றதன்
நன்கல நன்மக்கட் பேறு. (10)

## 7. புதல்வரைப் பெறுதல். पुत्रलाभः ॥

பெறுமவற்றுள் யாமறிவ தில்லை யறிவறிந்த
மக்கட்பே றல்ல பிற. (1)
எழுபிறப்புந் தீயவை தீண்டா பழிபிறங்காப்
பண்புடை மக்கட் பெறின். (2)
தம்பொரு ளென்ப தம்மக்க ளவர்பொருள்
தந்தம் வினையான் வரும். (3)
அமிழ்தினு மாற்ற வினிதேதம் மக்கள்
சிறுகை யளாவிய கூழ். (4)
மக்கண்மெய் தீண்ட லுடற்கின்ப மற்றவர்
சொற்கேட்ட லின்பஞ் செவிக்கு. (5)
குழலினி தியாழினி தென்பதம் மக்கள்
மழலைச்சொற் கேளா தவர். (6)
தந்தை மகற்காற்று நன்றி யவைபத்து
முந்தி யிருப்பச் செயல். (7)
தம்மிற்றம் மக்க ளறிவுடைமை மாநிலத்து
மன்னுயிர்க் கெல்லா மினிது. (8)
ஈன்ற பொழுதிற் பெரிதுவக்குந் தன்மகனைச்
சான்றோ னெனக்கேட்ட தாய். (9)
மகன்றந்தைக் காற்று முதவி யிவன்றந்தை
என்னோற்றான் கொல்லெனுஞ் சொல். (10)

## 8. அன்புடைமை. दयाप्रशंसा ॥

அன்பிற்கு முண்டோ வடைக்குந் தாழார்வலர்
புன்கணீர் பூச றரும். (1)
அன்பிலா ரெல்லாந் தமக்குரிய ரன்புடையார்
என்பு முரியர் பிறர்க்கு. (2)

அன்போ டியைந்த வழக்கென்ப வாருயிர்க்
கென்போ டியைந்த தொடர்பு. (3)

அன்பீனு மார்வ முடைமை யதுவீனும்
நண்பென்னு நாடாச் சிறப்பு. (4)

அன்புற் றமர்ந்த வழக்கென்ப வையகத்
தின்புற்றா ரெய்துஞ் சிறப்பு (5)

அறத்திற்கே யன்புசார் பென்ப வறியார்
மறத்திற்கு மஃதே துணை. (6)

என்பி லதனை வெயில்போலக் காயுமே
அன்பி லதனை யறம். (7)

அன்பகத் தில்லா வுயிர்வாழ்க்கை வன்பாற்கண்
வற்றல் மரந்தளிர்த் தற்று. (8)

புறத்துறுப் பெல்லா மெவன்செய்யும் யாக்கை
அகத்துறுப் பன் பிலவர்க்கு (9)

அன்பின் வழிய துயிர்நிலை யஃதிலார்க்
கென்புதோல் போர்த்த வுடம்பு. (10)

---

## 9, விருந்தோம்பல். अतिथिसमर्चनम् ॥

---

இருந்தோம்பி யில்வாழ்வ தெல்லாம் விருந்தோம்பி
வேளாண்மை செய்தற் பொருட்டு. (1)

விருந்து புறத்ததாத் தானுண்டல் சாவா
மருந்தெனினும் வேண்டற்பாற் றன்று. (2)

வருவிருந்து வைகலு மோம்புவான் வாழ்க்கை
பருவந்து பாழ்படுத லின்று (3)

அகனமர்ந்து செய்யா ளுறையு முகனமர்ந்து
நல்விருந் தோம்புவா னில். (4)

வித்து மிடல்வேண்டுங் கொல்லோ விருந்தோம்பி
மிச்சின் மிசைவான் புலம். (5)

செல்விருந் தோம்பி வருவிருந்து பார்த்திருப்பான்
நல்விருந்து வானத் தவர்க்கு. (6)
இனைத்துணைத் தென்பதொன் றில்லை விருந்தின்
துணைத்துணை வேள்விப் பயன். (7)
பரிந்தோம்பிப் பற்றற்றே மென்பர் விருந்தோம்பி
வேள்வி தலைப்படா தார். (8)
உடைமையு ளின்மை விருந்தோம்ப லோம்பா
மடமை மடவார்க ணுண்டு (9)
மோப்பக் குழையு மனிச்ச முகந்திரிந்து
நோக்கக் குழையும் விருந்து (10)

## 10. இனியவை கூறல். सान्त्ववचनम् ॥

இன்சொலா லீர மளைஇப் படிறிலவாஞ்
செம்பொருள் கண்டார்வாய்ச் சொல். (1)
அகனமர்ந் தீதலி னன்றே முகனமர்ந்
தின்சொல னாகப் பெறின். (2)
முகத்தா னமர்ந்தினிது நோக்கி யகத்தானாம்
இன்சொ லினதே யறம். (3)
துன்புறூஉந் துவ்வாமை யில்லாம் யார்மாட்டும்
இன்புறூஉ மின்சொ லவர்க்கு. (4)
பணிவுடைய னின்சொல னாத லொருவற்
கணியல்ல மற்றுப் பிற. (5)
அல்லவை தேய வறம்பெருகு நல்லவை
நாடி யினிய சொலின். (6)
நயனீன்று நன்றி பயக்கும் பயனீன்று
பண்பிற் றலைப்பிரியாச் சொல். (7)
சிறுமையு ணீங்கிய வின்சொன் மறுமையும்
இம்மையு மின்பந் தரும். (8)

இன்சொ லினிதீன்றல் காண்பா னெவன்கொலோ
வன்சொல் வழங்கு வது. (9)
இனிய வுளவாக வின்னாத கூறல்
கனியிருப்பக் காய்கவர்ந் தற்று. (10)

## 11. செய்ந்நன்றியறிதல். परोपकारप्रशंसा ॥

செய்யாமற் செய்த வுதவிக்கு வையகமும்
வானகமு மாற்ற லரிது (1)
காலத்தி னாற்செய்த நன்றி சிறிதெனினும்
ஞாலத்தின் மாணப் பெரிது. (2)
பயன்றூக்கார் செய்த வுதவி நயன்றூக்கின்
நன்மை கடலிற் பெரிது. (3)
தினைத்துணை நன்றி செயினும் பனைத்துணையாக்
கொள்வர் பயன்றெரி வார். (4)
உதவி வரைத்தன் றுதவி யுதவி
செயப்பட்டார் சால்பின் வரைத்து (5)
மறவற்க மாசற்றார் கேண்மை துறவற்க
துன்பத்துட் டுப்பாயார் நட்பு. (6)
எழுமை யெழுபிறப்பு முள்ளுவர் தங்கண்
விழுமந் துடைத்தவர் நட்பு. (7)
நன்றி மறப்பது நன்றன்று நன்றல்ல
தன்றே மறப்பது நன்று. (8)
கொன்றன்ன வின்னா செயினு மவர்செய்த
ஒன்றுநன் றுள்ளக் கெடும். (9)
எந்நன்றி கொன்றார்க்கு முய்வுண்டா முய்வில்லை
செய்ந்நன்றி கொன்ற மகற்கு. (10)

## 12. நடுவுநிலைமை अपक्षपातित्वप्रशंसा ||

தகுதி யெனவொன்று நன்றே பகுதியாற்
பாற்பட் டொழுகப் பெறின். (1)
செப்ப முடையவ னாக்கஞ் சிதைவின்றி
எச்சத்திற் கேமாப் புடைத்து. (2)
நன்றே தரினு நடுவிகந்தா மாக்கத்தை
அன்றே யொழிய விடல். (3)
தக்கார் தகவில ரென்ப தவரவர்
எச்சத்தாற் காணப் படும். (4)
கேடும் பெருக்கமு மில்லல்ல நெஞ்சத்துக்
கோடாமை சான்றோர்க் கணி. (5)
கெடுவல்யா னென்ப தறிகதன் னெஞ்சம்
நடுவொரீஇ யல்ல செயின். (6)
கெடுவாக வையா துலக நடுவாக
நன்றிக்கட் டங்கியான் றாழ்வு. (7)
சமன்செய்து சீர்தூக்குங் கோல்போ லமைந்தொருபாற்
கோடாமை சான்றோர்க் கணி. (8)
சொற்கோட்ட மில்லது செப்ப மொருதலையா
உட்கோட்ட மின்மை பெறின். (9)
வாணிகஞ் செய்வார்க்கு வாணிகம் பேணிப்
பிறவுந் தமபோற் செயின். (10)

## 13. அடக்கமுடைமை शमः ||

அடக்க மமரரு ளுய்க்கு மடங்காமை
ஆரிரு ளுய்த்து விடும். (1)
காக்க பொருளா வடக்கத்தை யாக்கம்
அதனினூஉங் கில்லை யுயிர்க்கு. (2)

செறிவறிந்து சீர்மை பயக்கு மறிவறிந்
தாற்றி னடங்கப் பெறின். (3)
நிலையிற் றிரியா தடங்கியான் றோற்றம்
மலையினு மாணப் பெரிது. (4)
எல்லார்க்கு நன்றாம் பணித லவருள்ளுஞ்
செல்வர்க்கே செல்வந் தகைத்து. (5)
ஒருமையு ளாமைபோ லைந்தடக்க லாற்றின்
எழுமையு மேமாப் புடைத்து. (6)
யாகாவா ராயினு நாகாக்க காவாக்காற்
சோகாப்பா சொல்லிழுக்குப் பட்டு. (7)
ஒன்றானுந் தீச்சொற் பொருட்பய னுண்டாயின்
நன்றாகா தாகி விடும். (8)
தீயினாற் சுட்டபு ணுள்ளாறு மாறாதே
நாவினாற் சுட்ட வடு. (9)
கதங்காத்துக் கற்றடங்க லாற்றுவான் செவ்வி
அறம்பார்க்கு மாற்றி னுழைந்து (10)

## 14. ஒழுக்கமுடைமை. सुशीलम् ॥

ஒழுக்கம் விழுப்பந் தரலா னொழுக்கம்
உயிரினு மோம்பப் படும். (1)
பரிந்தோம்பிக் காக்க வொழுக்கந் தெரிந்தோம்பித்
தேரினு மஃதே துணை. (2)
ஒழுக்க முடைமை குடிமை யிழுக்கம்
இழிந்த பிறப்பாய் விடும். (3)
மறப்பினு மோத்துக் சொளலாகும் பார்ப்பான்
பிறப்பொழுக்கங் குன்றக் கெடும். (4)

அழுக்கா றுடையான்க ணாக்கம்போன் றில்லை
ஒழுக்க மிலான்க ணுயர்வு. (5)

ஒழுக்கத்தி னொல்கா ருரவோ ரிழுக்கத்தின்
ஏதம் படுபோக் கறிந்து. (6)

ஒழுக்கத்தி னெய்துவர் மேன்மை யிழுக்கத்தின்
எய்துவ ரெய்தாப் பழி. (7)

நன்றிக்கு வித்தாகு நல்லொழுக்கந் தீயொழுக்கம்
என்று மிடும்பை தரும். (8)

ஒழுக்க முடையவர்க் கொல்லாவே தீய
வழுக்கியும் வாயாற் சொலல். (9)

உலகத்தோ டொட்ட வொழுகல் பலகற்றுங்
கல்லா ரறிவிலா தார். (10)

